# मीमांसान्यायप्रकाशः ।



[ मीमांसाप्रकरणम् । ]

श्रीअनन्तदेवसूनुना

श्रीआपदेवेन विरचितः ।



पण्डितकुलपतिना,

बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतः प्रकाशितश्च ।



कलिकातानगर्य्यां

कलिकातायन्त्रे

मुद्रितः ।



ई १८९८ ।

# मीमांसान्यायप्रकाशः ।



[ मीमांसाप्रकरणम् । ]

श्रीअनन्तदेवसूनुना

श्रीआपदेवेन विरचितः ।



पण्डितकुलपतिना,

बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

संस्कृतः प्रकाशितश्च ।



कलिकातानगर्य्यां

कलिकातायन्त्रे

मुद्रितः ।



इं १८९८ ।



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर वि, ए,

PANDITA KULAPATI

JIBANANDA VIDYASAGARA, B. A.

*Superintendent, Free Sanskrit College, Calcutta.*

LIBRARY
JUN 23 1975
B
132
M5 A57
1898

# मीमांसान्यायप्रकाशः।

यत्कृपालेशमात्रेण पुरुषार्थचतुष्टयम्।
प्राप्यते तमहं वन्दे गोविन्दं भक्तवत्सलम्॥
अनन्तगुणसम्पन्नमनन्तभजनप्रियम्।
अनन्तरूपिणं वन्दे गुरुमानन्दरूपिणम्॥

इह खलु परमकारुणिकेन भगवता जैमिन्यृषिणा अथातो धर्मजिज्ञासेत्यादिना द्वादशसु अध्यायेषु धर्मो विचारितः। तत्र वेदेन प्रयोजनमुद्दिश्य विधीयमानोऽर्थो धर्मः यथा यागादिः स हि यजेत स्वर्गकाम इत्यादिवाक्येन स्वर्गमुद्दिश्य विधीयते। तथा हि यजेतेत्यत्रास्ति अंशद्वयं यजिर्धातुः प्रत्ययश्च। तत्र प्रत्ययेऽप्यस्ति अंशद्वयम् आख्यातत्वं लिङ्त्वञ्च। आख्यातत्वञ्च दशसु लकारेषु विद्यते लिङ्त्वञ्च पुनः केवलं लिङ्येव। तत्राख्यातत्वलिङ्त्वाभ्यां भावनैवोच्यते। भावना नाम भवितुर्भवनानुकूलो भावकव्यापारविशेषः। सा च द्विविधा शाब्दी भावना आर्थी भावना चेति। तत्र पुरुषप्रवृत्त्यनुकूलभावकव्यापारविशेषा शाब्दी भावना। सा च लिङ्त्वांशेनोच्यते। लिङ्श्रवणेऽयं मां प्रवर्त्तयति मत्प्रवृत्त्यनुकूलव्यापारवानयमिति नियमेन प्रतीयमानत्वात्। यच्च यस्मात् प्रतीयते तत्तस्य वाच्यम्। यथा गोशब्दस्य गोत्वं स च प्रवृत्त्यनुकूलव्यापारविशेषो लोके पुरुषनिष्ठोऽभिप्रायविशेषः वेदे तु पुरुषाभावात् लिङादिशब्दनिष्ठ एव। न हि वेदः पुरुषनिर्मितः वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकं वेदाध्ययनसामान्यादधुनाध्ययनं यथेत्यादिना वेदापौरुषेयत्वस्य साधितत्वात्। यः कल्पः स कल्पपूर्व इति न्यायेन संसारस्यानादित्वादीश्वरस्य च सर्वज्ञत्वादीश्वरो गतकल्पीयं

वेदमस्मिन् कल्पे स्मृत्वा उपदिशतीत्येतावतैवोपपत्तौ प्रमाणान्तरेणार्थमुपलभ्य रचितत्वकल्पनानुपपत्तेश्च। ततश्च पुरुषाभावाच्छब्दनिष्ठैव सा अत एव शाब्दी भावनेति व्यपदिशन्ति।

सा च शाब्दी भावना अंशत्रयमपेक्षते साध्यं साधनमितिकर्त्तव्यतां चेति। तत्र साध्याकाङ्क्षायां वक्ष्यमाणांशत्रयोपेतार्थीभावना साध्यत्वेन सम्बध्यते एकप्रत्ययगम्यत्वेन समानाभिधानश्रुतेः। यद्यपि संख्यादीनामप्येकप्रत्ययगम्यत्वं समानं तथाप्ययोग्यत्वान्न तेषां भाव्यत्वेनान्वयः। करणाकाङ्क्षायां लिङादिज्ञानं करणत्वेन सम्बध्यते तस्य च करणत्वं न भावनोत्पादकत्वेन सन्निकर्षस्येव रूपादिज्ञाने सन्निकर्षात् प्राक् रूपज्ञानस्येव लिङादिज्ञानात् प्राक् शब्दधर्मभावनाया अभावप्रसङ्गात्। किन्तु भावनाभाव्यनिर्वर्त्तकत्वेन लिङादिज्ञानं हि शब्दभावनाभाव्यार्थीभावनां निर्वर्त्तयति कुठार इव छेदनम्। अतो लिङादिज्ञानस्य करणत्वेनान्वयः। इतिकर्त्तव्यताकाङ्क्षायां प्राशस्त्यज्ञानमितिकर्त्तव्यतात्वेन सम्बध्यते। तच्च प्राशस्त्यज्ञानं वायुर्वै क्षेपिष्ठा देवतेत्यर्थवादैर्जन्यते। ते ह्यर्थवादाः स्वार्थप्रतिपादने प्रयोजनमनुपलभमाना लक्षणया क्रतोः प्राशस्त्यं प्रतिपादयन्ति स्वार्थमात्रपरत्वे आनर्थक्यप्रसङ्गात् न चेष्टापत्तिरध्ययनविध्युपात्तत्वेनानर्थक्यानुपपत्तेः।

तथाहि स्वाध्यायोऽध्येतव्य इत्यध्ययनविधिः सकलस्य वेदस्याध्ययनकर्त्तव्यतां बोधयन् सर्वो वेदः प्रयोजनवदर्थपर्य्यवसायीति सूचयति निरर्थकस्याध्ययनानुपपत्तेः। स च वेदो विधिमन्त्रनामधेयनिषेधार्थवादात्मकः। तत्र विधिः प्रयोजनवदर्थविधानेनार्थवान्। स चाप्राप्तमर्थं विधत्ते यथा अग्निहोत्रं जुहुयात् स्वर्गकाम इति विधिरप्राप्तं प्रयोजनवद्धोमं विधत्ते अग्निहोत्रहोमेन स्वर्गं भावयेदिति। यत्र तु कर्म

प्रकारान्तरेण प्राप्तं तत्र तदुद्देशेन गुणमात्रविधानम्। यथा दध्ना जुहुयादित्यत्र होमस्याग्निहोत्रं जुहुयादित्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्रविधानम्। दध्ना होमं भावयेदिति। यत्र तूभयमप्राप्तं तत्र विशिष्टं विधत्ते तदुक्तम्। न चेदन्येन शिष्टा इति शिष्टा उपदिष्टा इत्यर्थः। यथा सोमेन यजेतेत्यत्र सोमयागयोरप्राप्तत्वात् सोमविशिष्टयागविधानं सोमवता यागेनेष्टं भावयेदिति। न चोभयविधाने वाक्यभेदः विशिष्टस्यैकत्वात् विशिष्टविधौ च मत्वर्थलक्षणा। यथा सोमपदेन मत्वर्थो लक्ष्यते सोमवतेति न हि मत्वर्थलक्षणां विना सोमस्यान्वयः सम्भवति यदि तावत् सोमयागयोरैक्यरूपेण भावनायां करणत्वेनैवान्वयः। सोमेन यागेनेष्टं भावयेदिति। तत उभयविधाने वाक्यभेदः सोमस्य यागवत्फलभावनाकरणत्वेनाप्रत्यक्षविरोधश्च। न हि सोमो यागो भवितुमर्हति धान्यप्रसङ्गापातश्च यागार्थत्वानुपपत्तिश्च यागे द्रव्यानुपपत्तिश्च। प्रत्ययवाच्यभावनायाः समानपदोपात्तेन यागेन करणाकाङ्क्षानिवृत्तत्वेन भिन्नपदोपात्तस्य सोमस्य करणत्वेनान्वयानुपपत्तिश्च स्यात्।

यदि च वैयधिकरण्येनान्वयः तत्र न तावद्यागेन सोममित्यन्वयः। समानपदोपात्तत्वात् प्रत्ययवाच्यफलभावनायां करणत्वेनान्वितस्य यागस्य सोमकर्मकभावेनान्वयानुपपत्तेः यागस्य सोमार्थत्वापत्तेश्च। न चेष्टापत्तिरदृष्टद्वयापत्तेः न हि यागस्य सोमार्थत्वं, दृष्टद्वारेण सम्भवति व्रीहिषु अवघातेनेव यागेन सोमे कस्यचिद् दृष्टस्याजननात्। अतस्तेन तावत् सोमे किञ्चिददृष्टं जननीयं प्रोक्षणेनेव व्रीहिषु। तथा यागस्य सोमार्थत्वे फलभावनायां सोमस्य करणत्वेनान्वयो वक्तव्यः भावनाकरणत्वञ्च भावनाभाव्यनिवर्त्तकत्वेनेत्युक्तम्। न च सोमः अदृष्टमन्तरेण फलं जनयितुं समर्थः ग्रहैर्जुहोतीति वाक्यविहितहोमेन तस्य भस्मी-

भावात्। अतो दृष्टद्वयापातान्न यागस्य सोमार्थत्वमिति न यागेन सोमं भावयेदित्यन्वयः सम्भवति करणत्वेनोपस्थितस्य सोमस्य साध्यत्वेनान्वयानुपपत्तेश्च।

अथ सोमेन यागं भावयेदित्यन्वयः। तत्र यद्यपि सोमस्य करणत्वेन यागार्थत्वाद् यागनिर्वृत्तिर्दृष्टमेव प्रयोजनं लभ्यते इति नादृष्टद्वयापत्तिः। नापि करणत्वेनोपस्थितस्य सोमस्य साध्यत्वान्वयानुपपत्तिः। करणत्वेनैवान्वयात्। तथाप्यप्राप्तत्वात् भावनाकरणत्वेनान्वितस्य यागस्य साध्यत्वेनान्वयानुपपत्तिस्तदवस्थैव। ननु यजेतेत्यत्र यागस्य न करणत्वेन नापि साध्यत्वेनोपस्थितिः। तद्वाचकतृतीयाद्यभावात्। किन्तु भावनायां यागसम्बन्धमात्रं प्रतीयते यागस्य च भावनासम्बन्धः करणत्वेन साध्यत्वेन च सम्भवति तत्र करणत्वांशमादाय फलसम्बन्धः। साध्यत्वांशमादाय गुणसम्बन्धश्च स्यादिति चेन्नैवम्। यद्यपि भावनया यागस्य सम्बन्धमात्रं प्रतीयते तथापि करणत्वेनोपस्थितिदशायां न साध्यत्वेनोपस्थितिः सम्भवति विरोधात्। तदवश्यं यागेन स्वर्गं भावयेदिति करणत्वेनान्वये सति पश्चात् सोमेन यागं भावयेदिति साध्यत्वेनान्वयो वक्तव्यः ततश्च वाक्यभेदः। न च प्रत्ययाभिहितभावनास्वरूपे यागस्वरूपमात्रमन्वेतीति वक्तुं युक्तं कारकाणामेव क्रियान्वयात्। तत्सिद्धं सोमस्य न यागे सामानाधिकरण्येन वान्वयः सम्भवतीति।

ननु यजेतेत्यत्र प्रत्ययाभिहितभावनायाः करणाकाङ्क्षायां यथा यागः करणत्वेनान्वेति। तथा इतिकर्त्तव्यताकाङ्क्षायां सोमस्य इतिकर्त्तव्यतात्वेन भावनायामेवान्वयोऽस्तु किं मत्वर्थलक्षणयेति चेन्नैवम्। सोमेनेति तृतीयया करणत्ववाचिन्या सोमस्येतिकर्त्तव्यतात्वानभिधानात्। तत्र यदि इतिकर्त्तव्यतात्वं लक्षणयोच्यते ततो वरं सोमपदे एव प्रकृतिभूते मत्वर्थलक्षणा

गुणे त्वन्याय्यकल्पनेति न्यायात्। अथ वेदो वा प्रायदर्शना-दित्यधिकरणोक्ताऽसञ्जातविरोधित्वन्यायेनान्त्ये प्रत्यय एव लक्षणेति चेत् तथापि सोमस्येतिकर्त्तव्यतात्वेनान्वयानुपपत्तिः। सिद्धस्य वस्तुन इतिकर्त्तव्यतात्वाभावात् क्रियाया एवेति-कर्त्तव्यतात्वात् द्रव्यस्य केवलमङ्गत्वात् अतएवेतिकर्त्तव्यता-त्वाभावात् द्रव्यस्य प्रकरणादग्रहणम्। यथाहुः "नावान्तर-क्रियायोगादृते वाक्योपकल्पितात्। गुणद्रव्ये कथं भावैर्गृ-ह्णन्ति प्रकृताः क्रिया इति॥" तदेतदग्रे वक्ष्यामः।

किं च सोमेन यजेतेति हि यागस्योत्पत्तिवाक्यं नाधिकार-वाक्यं ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यस्याधिकारवाक्यत्वात् उत्पत्तिवाक्ये च नेतिकर्त्तव्यताकाङ्क्षा इष्टविशेषाकाङ्क्षा कलुषि-तत्वेनेतिकर्त्तव्यताकाङ्क्षाया विस्पष्टानुत्थानात्। तत्सिद्धं सोमस्य नेतिकर्त्तव्यतात्वेन भावनायामन्वयः। तस्माद् विशिष्टविधौ अन्व-यानुपपत्त्या अवश्यं मत्वर्थलक्षणा वाच्येति। ननु एवमपि सोमेन यजेतेत्यत्र न विशिष्टविधानं गौरवात् मत्वर्थलक्षणापाताच्च। किन्तु दध्ना जुहोतीतिवद्गुणमात्रविधानमस्तु विधिशक्तेर्गुणोपसंक्र-मात् यथाहुः। "सर्वत्राख्यातसम्बद्धे श्रूयमाणे पदान्तरे। विधि-शक्त्युपसंक्रान्तेः स्याद्धातोरनुवादतेति।" न च यागस्याप्राप्तत्वान्न तदुद्देशेन सोमविधानमिति वाच्यम्। ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यनेन यागस्य प्राप्तत्वात्। न च अस्याधिकारविधित्वेन न, उत्पत्तिविधित्वमिति वाच्यम्। उद्भिदा यजेत पशुकाम इति-वदेकस्यैवोभयविधित्वोपपत्तेः। एवं सोमेन यजेतेत्यत्र न मत्वर्थ-लक्षणा यदि ह्यत्र विशिष्टविधानं स्यात्तदान्वयानुपपत्त्या मत्वर्थलक्षणा स्यात्। ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र तु यागविधाने क्वचिन्न मत्वर्थलक्षणा। न तावदेतस्मिन् वाक्ये ज्योतिष्टोमेन यागेन स्वर्गं भावयेदिति सामानाधिकरण्येनैव

नामपदस्यान्वयात्। नापि सोमेन यजेतेत्यत्र मत्वर्थलक्षणाया यागोद्देशेन सोमविधानात् सोमेन यागं भावयेदिति।

ननु अनुवादेऽप्यस्ति मत्वर्थलक्षणा। अतएवोक्तं "विधाने वानुवादे वा यागः करणमिष्यते। तत्समीपे तृतीयान्तस्तद्वाचित्वं न मुञ्चतीति।" अतश्च विशिष्टविधौ इव गुणविधावपि अस्त्येव मत्वर्थलक्षणेति चेन्नैवम्। गुणान्वयानुपपत्त्या हि मत्वर्थलक्षणा अङ्गीक्रियते। यदा च भावनायां धात्वर्थस्य करणत्वेन अन्वयस्तदान्वयानुपपत्त्या सा अङ्गीकर्त्तव्या। गुणविधौ च न धात्वर्थस्य करणत्वेनान्वयो मानाभावात्। न हि दध्ना जुहोतीत्यत्र होमस्य करणत्वं श्रूयते तद्वाचकतृतीयाद्यभावात्। कल्प्यते इति चेन्न गुणस्य तत्र विधित्सितत्वेन साध्याकाङ्क्षायां साध्यत्वकल्पनाया एवोचितत्वात् दध्ना होमं भावयेदिति। न चायमस्ति नियमो भावनायां धात्वर्थस्य करणत्वेनैव अन्वयो न प्रकारान्तरेणेति षष्ठाद्यपूर्वपक्षानुत्थानापत्तेः। षष्ठाद्ये हि यजेत स्वर्गकाम इत्यादौ प्रत्ययवाच्यायां वक्ष्यमाणार्थीभावनायां समानपदश्रुत्या यागस्य भाव्यत्वमाशङ्क्य अपुरुषार्थत्वेन परिहृतम्। यदि च धात्वर्थस्य करणत्वेनैव भावनायामन्वयस्तदा भाव्यत्वशङ्कैव नोदेतीति व्यर्थं षष्ठाद्यमधिकरणमापद्येत।

किञ्च वाजपेयाधिकरणे तन्त्वसम्बन्धमाशङ्क्य परिहृतः धात्वर्थस्य करणत्वेनैव अन्वये तन्त्वसम्बन्धशङ्कैव न स्यात् तत्र तन्त्वसम्बन्धशङ्कापरिहारौ च व्याख्यातौ। किञ्च न धात्वर्थस्य करणत्वेनैव अन्वयः। गुणकामाधिकरणे आश्रयत्वेन धात्वर्थान्वयस्योक्तत्वात्। तथाहि दध्नेन्द्रियकामस्य जुहुयादित्यत्र न तावद्धोमो विधीयते तस्य वचनान्तरेण विहितत्वात् नापि होमस्य फलसम्बन्धः गुणपदानर्थक्यापत्तेः। नापि गुणसम्बन्धं विधत्ते फलपदानर्थक्यापातात् नाप्युभयसम्बन्धं विधत्ते प्राप्ते

कर्म्मणि अनेकविधाने वाक्यभेदापत्तेः। यथाहुः “प्राप्ते कर्म्मणि नानेको विधातुं शक्यते गुणः। अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नत इति॥” अत्र च कर्म्मपदवद् गुणेत्युपलक्षणम्। एकोद्देशेन अनेकविधाने वाक्यभेदात्। अतएव ग्रहैकत्वाधिकरणे ग्रहं सम्मार्ष्टीत्यत्र ग्रहोद्देशेन एकत्वसम्मार्गविधौ वाक्यभेदात् ग्रहैकत्वमविवक्षितमित्युक्तम्। रैवत्यधिकरणे च एतस्यैव रैवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेतेत्यत्र वारवन्तीयस्य रैवतीसम्बन्धे अग्निष्टोमसामसम्बन्धे फलसम्बन्धे च विधीयमाने वाक्यभेदाद्भावनोपसर्जनं भावनान्तरं विधीयते इत्युक्तम्।

तस्मात् प्राप्ते होमे नोभयविधानं सम्भवति नापि होमान्तरं विधीयते गौरवात् प्रकृतहानाप्रकृतकल्पनाप्रसङ्गाच्च। मत्वर्थलक्षणाप्रसङ्गाच्च नापि दध्येव केवलं करणत्वेन विधीयते इति युक्तं केवलस्य व्यापारानाविष्टस्य करणत्वानुपपत्तेः। कर्त्तृव्यापारव्याप्यत्वनियमात् करणत्वस्य। किं तर्हि विधीयते इति चेत् दध्नेति तृतीययोपात्तं दधिकरणत्वं फलभावनायां करणत्वेन विधीयते प्रत्ययार्थत्वेन दध्नोऽपि तस्य प्राधान्यात्। एवञ्च दधिकरणत्वेन इन्द्रियं भावयेदिति,वाक्यार्थः। करणत्वञ्च किंप्रतियोगिकमित्यपेक्षायां सन्निधिप्राप्तो होम आश्रयत्वेन सम्बध्यते ततश्च सिद्धो धात्वर्थस्याश्रयत्वेनान्वयः।

प्रकृतमनुसरामः। तदिदं धात्वर्थस्य न करणेनैवान्वय इति किं तर्हि क्वचित् करणत्वेन क्वचित् साध्यत्वेन क्वचिदाश्रयत्वेनेति गुणविधौ च साध्यत्वेनैवान्वयः सम्भवतीति न मत्वर्थलक्षणया प्रयोजनम्। किञ्च गुणविधौ मत्वर्थलक्षणायां गुणस्य धात्वर्थाङ्गत्वे किं मानमिति वक्तव्यम्। न तावच्छ्रुतिः मत्वर्थलक्षणायां तृतीयाश्रुतिर्मत्वर्थस्यैवाङ्गत्वे मानं स्यात् न गुणस्याङ्गत्वे। समभिव्या-

द्वारात्मकं वाक्यमिति चेत्? तत् किं स्वतन्त्रमेव मानमुत लिङ्ग-श्रुती कल्पयित्वा?। नाद्यः। बलाबलाधिकरणविरोधात्। तत्र हि वाक्यं लिङ्गश्रुती कल्पयित्वा अङ्गत्वे मानमित्युक्तम्। द्वितीये प्रत्यक्षां श्रुतिमुत्सृज्य श्रुत्यन्तरकल्पने तस्या एव वा आवृत्ति-कल्पने व्यर्थः प्रयासः समाश्रितः स्यात् विशिष्टविधौ चागत्या तदाश्रयणम्।

किञ्च भवतु श्रुत्यन्तरकल्पनं तथापि तत्सहकृतः प्रत्यक्ष एव वा विधिर्धात्वर्थाङ्गत्वेन गुणं विधत्ते? उत कल्पितं विध्यन्तरम्? कल्पितमिति चेन्न श्रुतविधेर्व्यर्थतापत्तेः। न हि तेन तदा गुणो विधीयते कल्पितविध्यन्तराङ्गीकारात् नापि धात्वर्थः तस्य वचनान्तरेण विहितत्वात्। अथ श्रूयमाण एव विधिः कल्पितश्रुतिसहकृतो धात्वर्थाङ्गत्वेन गुणं विधत्ते इति चेत् तर्हि तत्र कथं धात्वर्थस्यान्वयः करणत्वेनेति चेन्न अन्वयानुप-पत्तेः। न हि सम्भवति दध्ना होमेनेति चान्वयः साध्यत्वेनैवा-न्वयो दध्ना होमं भावयेदिति चेन्न। तथा सति अनुवादेऽपि धात्वर्थः करणत्वेनैवान्वेतीत्येतदुपेक्षितं स्यात्। विवक्षितवा-क्यार्थश्च विनैव मत्वर्थलक्षणया अङ्गीकृतः स्यात् तस्मान्न गुणविधौ मत्वर्थलक्षणा। यत्तु विधाने वा अनुवादे वेति वार्त्तिकं तत् प्रती-तिमवलम्ब्य न वस्तुगतिम्। तथाहि यावज्जि अग्निहोत्रं जुहुया-दिति वाक्यं नालोच्यते केवलं च दध्ना जुहोतीति वाक्यमालोच्यते तदा षष्ठाद्यन्यायेन होमस्याभाव्यतां जानतां प्रतिपदाधिकरण-भावार्थाधिकरणवासनावासितानां भवत्येतादृशी मतिः यद्दधि-मता होमेनेष्टं भावयेदिति। प्रतिपदाधिकरणे हि सोमेन यजे-तेत्यादिषु किं गुणधात्वर्थयोः फलभावनाकरणत्वेनान्वयः? उत एकस्यैव? इति सन्दिह्य प्रधानसम्बन्धलाभात् विनिगमनाविर-हाच्च सर्वेषां फलभावनाकरणत्वेनान्वयमाशङ्क्य लाघवादेकस्यैव

भावनाकरणत्वमित्युक्तम्। भावनाकरणत्वं हि भावनाभाव्यनिर्वर्त्तकतया भाव्यं च स्वर्गादिना दृष्टमन्तरेणेति अनेकेषां करणत्वे अनेकादृष्टकल्पनाप्रसङ्गात्। तस्मादेकस्यैव करणत्वं यदाप्येकस्य तदापि किं द्रव्यगुणयोः फलभावनाकरणत्वमुत धात्वर्थस्येति भावार्थाधिकरणे सन्दिह्य द्रव्यगुणयोरेव भावनाकरणत्वम्। भूतं भव्यायोपदिश्यते इति न्यायादित्याशङ्क्य धात्वर्थस्यैव भावनाकरणत्वं पदश्रुतेर्बलीयस्त्वादित्युक्तम्। अतश्च सिद्धमेतद्वाक्यान्तरानालोचनदशायां गुणविधावपि धात्वर्थस्य करणत्वाशङ्कायां गुणपदे मत्वर्थलक्षणेति।

यदा त्वग्निहोत्रं जुहोतीति होमविधायकं वाक्यान्तरमालोच्यते तदा होमस्य वाक्यान्तरेणैव विहितत्वात्तदुद्देशेन गुणमात्रं विधीयत इत्यालोचनान्न मत्वर्थलक्षणेति। अतएवोक्तं पार्थसारथिमिश्रैराधाराग्निहोत्राधिकरणे फलतो गुणविधिरयं न प्रतीतित इति। यद्वा एतद्वार्त्तिकमधिकारविध्यभिप्रायम्। उद्भिदा यजेतेत्यादीनामधिकारात् तत्र हि यागो विधीयतामुत्पत्तिवाक्यसिद्धो वा अनूद्यतामुभयथापि करणत्वेनान्वयात् तृतीयान्तस्य तद्वाचित्वं अन्यथा अन्वयानुपपत्तेरिति। तस्माद्गुणविधौ विनापि मत्वर्थलक्षणया अन्वयोपपत्तेर्न मत्वर्थलक्षणेति। अतश्च सोमेन यजेतेत्यत्र न विशिष्टविधानं किन्तु गुणमात्रविधानं यागस्तु ज्योतिष्टोमेन स्वर्गकामो यजेतेत्येतस्मिन् वाक्ये विधीयत इत्येव युक्तम् अन्यथा मत्वर्थलक्षणापत्तेरिति। अत्रोच्यते यद्यपि यागोद्देशेन सोमविधौ न मत्वर्थलक्षणा तथापि यागस्याप्राप्तत्वात् सोमेन यजेतेत्यत्र न यागोद्देशेन सोमविधानं सम्भवति। न च ज्योतिष्टोमेन इत्यादिना प्राप्तत्वात् तदुद्देशेन गुणमात्रं विधीयते इति वाच्यम्। तस्याधिकारविधित्वेनोत्पत्तिविधित्वानुप-

पत्तेः। कर्म्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः। तेन च विहितस्य कर्म्मणः फलविशेषसम्बन्धमात्रमधिकारविधिना क्रियते फलविशेषसम्बन्धबोधकस्याधिकारविधित्वात्। यथा आग्नेयोऽष्टाकपालो भवतीत्येतद्विहितस्य कर्म्मणः फलविशेषसम्बन्धमात्रं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्यं विधत्ते तस्याधिकारविधित्वं नोत्पत्तिविधित्वम् स्यादेतद् दर्शपूर्णमासाभ्यामित्येतस्य नोत्पत्तिविधित्वं सम्भवति। आग्नेयोऽष्टाकपाल इत्यादिवाक्यानर्थक्यापत्तेः। न हि तेन तदा कर्म्म विधीयते तस्य दर्शपूर्णमासाभ्यामित्यनेन विहितत्वात्। नापि गुणविधानं सम्भवति प्राप्ते कर्म्मणि अनेकगुणविधाने वाक्यभेदापत्तेः। अत आग्नेयोऽष्टाकपाल इत्यस्योत्पत्तिविधित्वं दर्शपूर्णमासाभ्यामित्यस्य चाधिकारविधित्वं युक्तम्।

ज्योतिष्टोमेनेत्यस्याधिकारविधेरुद्भिदा यजेतपशुकाम इत्यादिवदुत्पत्तिविधित्वे स्वीक्रियमाणे न कस्यचिदानर्थक्यम्। सोमेन यजेतेत्यस्य गुणविधित्वात् यागोद्देशेन सोममात्रविधानाच्च न वाक्यभेद इति चेन्नैवम्। यद्यपि सोमेन यजेतेत्यत्र लाघवान्न वाक्यभेदः तथापि ज्योतिष्टोमेन इत्यस्मिन् वाक्ये कर्म्मस्वरूपे तस्य च फलसम्बन्धे विधीयमाने गौरवलक्षणो वाक्यभेदोऽस्त्येव। सोमेन यजेतेत्येतद्वाक्यविहितकर्म्मणः फलसम्बन्धमात्रविधाने तदभावात् उद्भिदा यजेतेत्यत्र तु वचनान्तराभावेन अगत्या तदाश्रयणम्। न च सोमेन यजेतेत्यत्रापि कर्म्मस्वरूपे गुणे च विधीयमाने वाक्यभेदः स्यादिति वाच्यम्। श्रूयमाणेन विधिना गुणस्याविधेयत्वात्। विशेषणविधेरार्थिकत्वात् सर्वत्र हि विशिष्टविधौ विशेषणविधिरार्थिकः। ज्योतिष्टोमेनेत्यस्य तूत्पत्तिविधित्वे कर्म्मस्वरूपं फलसम्बन्धश्चेति श्रूयमाणेनैव विधिना विधातव्यमिति दृढो गौरव-

लक्षणो वाक्यभेदः। यथाहुः। "श्रौतव्यापारनानात्वे शब्दानामतिगौरवम्। एकोक्त्यवसितानान्तु नार्थाक्षेपो विरुध्यत" इति। न च सोमेन यजेतेत्यस्योत्पत्तिविधित्वे यद्यपि न वाक्यभेदः तथापि मत्वर्थलक्षणा स्यादेवेति वाच्यम्। तस्याः स्वीक्रियमाणत्वात् लक्षणा अतो वाक्यभेदस्य जघन्यत्वात् लक्षणा हि पददोषो वाक्यभेदस्तु वाक्यदोषः पदवाक्यदोषयोर्मध्ये पद एव दोषकल्पनाया उचितत्वात्। गुणे त्वन्याय्यकल्पनेति न्यायात्। अतएव जातपुत्रः कृष्णकेशोऽग्नीनादधीत इत्यत्राधानानुवादेन जातपुत्रत्वकृष्णकेशत्वविधाने वाक्यभेदात् पदद्वयाभ्यामवस्थाविशेषो लक्ष्यत इत्युक्तम्। तस्माद्वाक्यभेदप्रसक्तौ लक्षणैव स्वीकार्य्या। तस्मात् सोमेन यजेतेत्ययमेवोत्पत्तिविधिर्न ज्योतिष्टोमेनेत्ययम्। गौरवलक्षणवाक्यभेदापत्तेः। किञ्च सोमेन यजेतेत्यत्र यागविधाने श्रुत्यर्थविधानं स्यात् गुणविधाने तु वाक्यार्थविधानम्। तच्च श्रुत्यर्थविधाने सम्भवेऽयुक्तम्। यथाहुः "वाक्यार्थविधिरन्याय्यः श्रुत्यर्थविधिसम्भव" इति वाक्यार्थः पदान्तरार्थ इत्यर्थः। ज्योतिष्टोमेनेत्यत्रापि फलोद्देशेन यागस्यैव विधानान्न वाक्यार्थविधानम्। तदुत्पत्तिविधित्ववादिनापि तदङ्गीकाराच्च तस्मात् ज्योतिष्टोमेनेत्ययमधिकारविधिरेव। अपि च कर्मस्वरूपविधिस्तत्र स्वीकार्य्यो यत्र कर्मणो रूपमुपलभ्यते। यागस्य च द्वे रूपे द्रव्यं देवता चेति। सोमेन यजेतेत्यत्र यद्यपि देवता नोपलभ्यते सोमयागस्याव्यक्तत्वात्। अव्यक्तत्वञ्च स्वार्थचोदितदेवताराहित्यम् न तु देवताराहित्यमात्रम्। ऐन्द्रवायवं गृह्णातीत्यादिवाक्यविहितग्रहणाङ्गदेवतानां सत्त्वात् ग्रहणार्थाभिरपि देवताभिः प्रसङ्गतो यागोपकारस्य क्रियमाणत्वात्। तथापि द्रव्यमुपलभ्यत एव तेनापि यागस्वरूपं ज्ञातुं शक्यमेव। ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र च न द्रव्यं देवता वा श्रूयते अतस्तस्यो-

त्पत्तिविधित्वेन यागविशेषज्ञानं यागसामान्यस्याविधेयत्वात् विशेषस्यैव विधेयत्वादित्यादिक्लेशेन स्यात्। अतो नायं कर्मोत्पत्तिविधिः।

ननु एवमपि अग्निहोत्रं जुहोतीत्ययमपि होमोत्पत्तिविधिर्न स्यात् रूपाश्रवणात्। तच्छ्रवणाच्च दध्ना जुहोतीत्ययमेव उत्पत्तिविधिः स्यात्। तथा चाघाराग्निहोत्राधिकरणविरोधः। तत्र हि अग्निहोत्रं जुहोतीत्यस्योत्पत्तिविधित्वं दध्ना जुहोतीत्यादीनां च गुणविधित्वमुक्तमिति चेत् सत्यम्। अग्निहोत्रं जुहोतीत्यत्र यद्यपि रूपं नोपलभ्यते अग्निहोत्रशब्दस्य तत्प्रख्यन्यायेन नामधेयत्वात् तदेतदग्रे वक्ष्यामः। तथापि तस्योत्पत्तिविधित्वं स्वीक्रियते अन्यथा आनर्थक्यापत्तेः। दध्ना जुहोतीत्यस्य च नानर्थक्यं गुणविधित्वोपपत्तेः। अतः अग्निहोत्रं जुहोतीत्ययं कर्मोत्पत्तिविधिरिति युक्तम्। ज्योतिष्टोमेनेत्यस्य च नानर्थक्यमधिकारविधित्वोपपत्तेः। अतः किमर्थं सम्भवति रूपवति वाक्ये कर्मविधाने तद्रहिते तत् स्वीकार्य्यम्। किञ्च दध्ना जुहोतीत्यस्य कर्मोत्पत्तिविधित्वे पयसा जुहोत्यनेनैतत्कर्मानुवादेन न पयो विधातुं शक्यते उत्पत्तिशिष्टदध्यवरोधात् उत्पत्तिशिष्टगुणावरुद्धे हि न गुणान्तरं विधीयते आकाङ्क्षाया उत्पत्तिशिष्टेनैव निवृत्तत्वात्। अतस्तेनापि शिष्टं कर्मान्तरं विधेयम्। तथा च अनेकादृष्टकल्पना गौरवम् अग्निहोत्रं जुहोतीत्यस्य तु उत्पत्तिविधित्वे एतद्वाक्यविहितस्य कर्मणो द्रव्याकाङ्क्षायां युगपदेव खले कपोतन्यायेन दध्ना जुहोति पयसा जुहोतीत्यादिवाक्यैर्गुणा विधीयन्ते इति नानेकादृष्टकल्पना गौरवम् अतोऽग्निहोत्रं जुहोतीत्ययमुत्पत्तिविधिः। पयसा जुहोतीत्यादयस्तु गुणविधय इति युक्तम्। सोमेन यजेतेत्यत्र तु रूपवति वाक्ये कर्मोत्पत्तिविधाने स्वीक्रियमाणे न किञ्चिद्दूषणं पश्यामः। ये-

ऽपि एकस्यादृष्टस्य तुल्यत्वात् तस्माद् युक्तम् सोमेन यजेतेत्ययमेवोत्पत्तिविधिरिति अलमनया विधिनिरूपणागतप्रपञ्चनिरूपणचिन्तया।

प्रकृतमनुसरामः। तत्त्विदं विधिः प्रयोजनवन्तमप्राप्तार्थं विधत्ते इति। स च विधिश्चतुर्विध उत्पत्तिविधिर्विनियोगविधिरधिकारविधिः प्रयोगविधिश्चेति। तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः। यथा अग्निहोत्रं जुहोतीति उत्पत्तिविधौ च कर्मणः करणत्वेनैवान्वयः। होमेनेष्टं भावयेदिति। न तु होमं कुर्य्यादिति साध्यत्वेन। तथा सति साध्यस्य साध्यान्तरान्वयायोगेनाधिकारवाक्यगतफलसम्बन्धो न स्यात् करणत्वेन त्वन्वये होमेनेष्टं भावयेत्। किं तदिष्टमित्याकाङ्क्षायां फलविशेषसम्बन्धो घटते न चोत्पत्तिविधाविष्टवाचकपदाभावेन कर्मणा इष्टं भावयेदिति कथं वाक्यार्थ इति वाच्यम्। विधिश्रुतेरेव इष्टबोधकत्वात् सा हि पुरुषार्थे पुरुषं प्रवर्त्तयन्ती कर्मणः फलसम्बन्धमात्रं बोधयति तस्माद् युक्तमुत्पत्तिविधौ कर्म करणत्वेनान्वेतीति। अतएवोद्भिदा यजेतेत्यादौ तृतीयान्तः उद्भिच्छब्द उपपद्यते उद्भिदा यागेनेष्टं भावयेदित्यन्वयोपपत्तेः। येषामपि इष्टसाधनत्वं लिङर्थस्तेषामपि तृतीयान्तानां कर्मनामधेयानामन्वयोऽनुपपन्न एव न हि सम्भवति। याग इष्टसाधनमुद्भिदेति तृतीयोपात्तस्य कारकस्य लिङ्गसंख्यान्वयायोग्यस्य क्रिययैवान्वयात्।

ननु तथाप्यग्निहोत्रं जुहोतीत्यादिषु कर्मोत्पत्तिविधिषु द्वितीयान्तानां कर्मनामधेयानामन्वयोऽनुपपन्नः न हि सम्भवति होमेन भावयेदग्निहोत्रमिति सत्यम्। श्रूयमाणा तावद् द्वितीया अर्थाच्छिप्तसाध्यत्वानुवादिका होमस्य हि करणत्वेनान्वयात् असाधितस्य करणत्वानुपपत्तेः। तस्याश्चानन्वयोपस्थितौ सा

शक्तून् जुहोतीतिवत् तृतीयार्थं लक्षयति अग्निहोत्रेण होमेनेष्टं भावयेदित्युक्तम् पार्थसारथिमिश्रैः। अतश्च द्वितीयान्तानां कर्मनामधेयानामन्वयो नानुपपन्नः। तत्सिद्धम् उत्पत्तिविधौ कर्म करणत्वेनान्वेतीति।

अङ्गप्रधानसम्बन्धबोधको विधिर्विनियोगविधिः। यथा दध्ना जुहोतीति स हि तृतीयाप्रतिपन्नाङ्गभावस्य दध्नो होमसम्बन्धं विधत्ते दध्ना होमं भावयेदिति। एतस्य विधेः सहकारिभूतानि षट् प्रमाणानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि। एतत्सहकृतेन विनियोगविधिनाङ्गत्वं परोद्देशप्रवृत्तकृतिव्याप्यत्वरूपं परार्थापरपर्य्यायं ज्ञाप्यते। तत्र निरपेक्षो रवः श्रुतिः। सा च त्रिविधा विधात्री अभिधात्री विनियोक्त्री चेति। तत्र विधात्री लिङाद्यात्मिका। अभिधात्री व्रीह्यादिश्रुतिः। यस्य च शब्दस्य श्रवणादेव सम्बन्धः प्रतीयते सा विनियोक्त्री। सा च त्रिधा विभक्तिरूपा एका समानाभिधानरूपा एका एकपदरूपा चेति। तत्र विभक्तिश्रुत्याङ्गत्वम्। यथा व्रीहिभिर्यजेतेति तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वम्। न चोत्पत्तिशिष्टपुरोडाशावरुद्धे यागे कथं व्रीहीणामङ्गत्वमिति वाच्यम्। पुरोडाशप्रकृतितयोपपत्तेः पशोरिव हृदयादिरूपहविःप्रकृतितया यागाङ्गत्वम्। 'न च साक्षात् पशोरेवाङ्गत्वं किं न स्यादिति वाच्यम्। तस्य विशसनात् अवदीयमानत्वाच्च हृदयादीनाम्। अवदीयमानं हि हविः यथा पुरोडाशादिमध्यात् पूर्वार्द्धाच्चावद्यतीति वाक्यात् हृदयादीनि चावदीयमानानि न पशुः हृदयस्याग्रेऽवद्यतीति वाक्यादतो हृदयादीन्येव हवींषि पशुस्तु प्रकृतिद्रव्यम्। पात्नीवद यागे तु साक्षात् पशुरेवाङ्गम्। तस्य जीवत एव पर्य्यग्निकृतं पात्नीवन्तमुत्सृजतीत्युत्सर्गविधानात्। यत्र तु विशसनं तत्र पशुः प्रकृतिद्रव्य-

मित्येव सिद्धम् एवं व्रीहयोऽपि प्रकृतिद्रव्यतया यागाङ्गम्। तृतीयाश्रुत्येति आरुण्यस्यापि क्रयाङ्गत्वम्। तृतीयाश्रुत्या न चामूर्त्तस्य तस्य कथं क्रयाङ्गत्वमिति वाच्यम्। एकहायनी-रूपद्रव्यपरिच्छेदद्वारा तदुपपत्तेः। व्रीहीन् प्रोक्षतीति प्रोक्षणस्य व्रीह्यङ्गत्वं द्वितीयाश्रुत्या तच्च प्रोक्षणं न व्रीहिस्वरूपार्थं स्वरूपे आनर्थक्यात् व्रीहिस्वरूपस्य प्रोक्षणं विना अनुपपत्त्य-भावात्। किन्त्वपूर्वसाधनत्वप्रयुक्तं यदि व्रीहिषु प्रोक्षणं क्रियते तदा तैर्यागे अनुष्ठिते अपूर्वं भवति नान्यथेति। अतः प्रकरणसहकृतया द्वितीयया श्रुत्या तण्डुलनिर्वृत्तिप्रणाल्या यदपूर्वसाधनत्वं तदङ्गत्वं प्रोक्षणस्योच्यत इति एवं सर्वेषु अप्य-ङ्गेषु अपूर्वयुक्तत्वं वेदितव्यम्।

एवमिमामगृभ्णन् रशनामृतस्य इत्यश्वाभिधानीमादत्त इत्यत्रापि द्वितीयाश्रुत्या मन्त्रस्याश्वाभिधान्यङ्गत्वम्। यत्तु वाक्यीयोऽयं विनियोग इति तन्न तथा सति वाक्याल्लिङ्गस्य बलीयस्त्वेन यावद्वाक्यादश्वाभिधान्यङ्गं भवति तावल्लिङ्गाद्रश-नामात्राङ्गत्वमेव स्यात् स्योनन्ते सदनं कृणोमीत्यस्येव सद-नाङ्गत्वम्। श्रौतविनियोगपक्षे तु यावल्लिङ्गाद्रशनामात्रा-ङ्गत्वं तावच्छ्रुत्या ऐन्द्र्या गार्हपत्यमुपतिष्ठते इत्यत्र तृतीया-श्रुत्या ऐन्द्र्या ऋचः गार्हपत्योपस्थानाङ्गत्ववत् अश्वाभिधान्यां विनियोगः क्रियत इति युक्तं मन्त्रस्याश्वाभिधान्यङ्गत्वम्। तस्मात् श्रौत एवायं विनियोगः। यदाहवनीये जुहो-तीत्याहवनीयस्य होमाङ्गत्वं सप्तमीश्रुत्या एवमन्योऽपि विभ-क्तिश्रुत्या विनियोगो ज्ञेयः। पशुना यजेतेत्यत्रैकत्वपुंस्त्वयोः समानाभिधानश्रुत्या कारकाङ्गत्वं यजेतेत्याख्याताभिहितस-ङ्ख्याया भावनात्वं समानाभिधानश्रुतेरेकपदश्रुत्या च यागा-ङ्गत्वम्। न चामूर्त्तायास्तस्याः कथं यागाङ्गत्वमिति वाच्यम्।

कर्तृपरिच्छेदद्वारा एतदुपपत्तेः कर्त्ता चाक्षेपलभ्य आख्यातेन हि भावनोच्यते सा च कर्त्तारं विनानुपपन्ना तमाक्षिपति।

ननु किमित्येवं वर्ण्यते आक्षेपलभ्यः कर्त्तेति। आख्यातवाच्य एव किं न स्यात् आख्यातश्रवणे भावनाया इव कर्त्तुरपि प्रतिपत्तेः। न च भावनयैवाक्षेपसम्भवे किमिति तद्वाचकत्वं कल्पनीयमिति। साम्प्रतं तथा सति आख्यातवाच्यकर्त्रैव भावनाक्षेपसम्भवे तद्वाचकत्वमपि न स्यात्। किञ्च भावनाया न केवलं कर्त्रैव सम्बन्धः कारकान्तरेणापि सम्बन्धात्। अतः सा न झटिति कर्त्तारमेवाक्षिपेत् विशेषाभावात्। कर्त्ता तु भावनयैव सम्बद्धो न कारकान्तरेण गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यादिति न्यायात्। अतः स झटिति तामेवाक्षिपेत् इति स एवाख्यातवाच्यः भावना तु आक्षेपलभ्यैव किं न स्यात्। किञ्चैवं तृतीयादिविभक्तीनामपि करणादिवाचकत्वं न स्यात् तेषामपि कर्त्तृवदाक्षेपलाभसम्भवात्।

किञ्च यदि कर्त्ता न वाच्यः स्यात् कथमेकत्वं तेनान्वियात्। न हि शाब्दमशाब्देनान्वेतीति युक्तम् अन्यथा ऊहादिलोपप्रसङ्गः। किञ्च देवदत्तः पचतीति सामानाधिकरण्यं न स्यात्। न हि केवलं भावनावाचकस्याख्यातस्य देवदत्तपदेन सामानाधिकरण्यमुपपद्यते एकार्थनिष्ठत्वाभावात्। कर्तृवाचकत्वे तूपपद्यते एव। लः कर्त्तरीति व्याकरणस्मृतिविरोधस्तु कर्त्तुरनभिधेयत्वे स्पष्ट एव। किञ्च कर्त्तुरनभिधेयत्वे देवदत्तेन पचतीति प्रयोगप्रसङ्गः। तृतीया हि अनभिहितयोः कर्तृकरणयोर्विहिता आख्यातेन च कर्त्ता नाभिहित इति कर्तृवाचिनी तृतीया स्यादेव। कर्त्तुरभिधाने तु अभिहितत्वादेव तृतीया न प्राप्नोति तस्या अनभिहिताधिकारत्वात्। देवदत्तः पचतीति प्रथमा तु प्राप्नोत्येव प्रथमाया अभिहित-

कारकविभक्तित्वात् प्रतिपदिकार्थमात्रवाचित्वाद्वा न च तदा प्रातिपदिकेनैवार्थस्योक्तत्वात् प्रथमावैयर्थ्यम्। लिङ्गसङ्ख्याप्रतिपत्त्यर्थं तस्या आवश्यकत्वात् केवलप्रातिपदिकस्य प्रयोगासाधुत्वाच्च। ततश्च यदि कर्त्ता न वाच्यः स्याद्देवदत्तेन पचतीति प्रयोगः स्यात् तस्मादाख्यातवाच्यः कर्त्तेति सिद्धमिति पूर्वपक्षसङ्क्षेपः।

अत्राहुः। स एव हि शब्दस्यार्थो यः प्रकारान्तरेण न लभ्यते अनन्यलभ्यः शब्दार्थ इति न्यायात्। अतएव न गङ्गापदस्य तीरमर्थः लक्षणयैव प्रतिपत्तिसम्भवात्। अतएव च न वाक्यार्थे शक्तिः। एवञ्चाख्यातवाच्यभावना कर्त्तारं विना अनुपपन्ना तमाक्षिपतीति। आक्षेपादेव कर्त्तुः प्रतिपत्तिसम्भवे किमिति तद्वाचकत्वमाख्यातस्य कल्पनीयम्। न च विनिगमनाविरहः कृतिमान् हि कर्त्ता। एवञ्च कृतेरेव भावनापरपर्य्याया आकृत्यधिकरणन्यायेनाख्यातवाच्यत्वसम्भवेन तद्वतः कर्त्तुर्वाच्यत्वं कल्पनीयं गौरवप्रसङ्गात्। न च भावना कारकान्तरेणापि सम्बद्धा तदुज्झित्वा न झटिति कर्त्तारमाक्षिपतीति वाच्यम्। सा हि यथा नियमेन कर्त्रा सम्बद्धा न तथा करणादिकारकान्तरेण तिष्ठतीत्यादिषु तया तदनाक्षेपात्। अतः प्रथमं सा कर्त्तारमेवाक्षिपति न कारकान्तरम्। अतएव चाख्याताभिहिता सङ्ख्या न कारकान्तरेण सम्बध्यते तस्य प्रथममनुपस्थितेः। अतएव तृतीयादिविभक्तीनां करणादिवाचित्वम्। भावनायास्तैः सह नियतसम्बन्धाभावेन तया तेषां नियमेनानाक्षेपात् आख्यातश्रवणात् प्रागपि तृतीयादिविभक्तिश्रवणे करणादिप्रतीतेर्जायमानत्वाच्च। न च शाब्दी सङ्ख्या कथमशाब्देन कर्त्रान्वेतीति वाच्यम्। कर्त्तुर्लक्षणाङ्गीकारात् यथा च लक्षितं तीरं शाब्देन घोषेणान्वेति एवं लक्षितः कर्त्ता

एकत्वेनान्वेष्यति। अतएव देवदत्तः पचतीति सामानाधिकरण्यमुपपद्यते कर्त्तुर्लक्षणाङ्गीकारात्।

न च मुख्ये सम्भवति किमिति लाक्षणिकत्वं स्वीकार्य्यमिति वाच्यम्। अनन्यलभ्यशब्दार्थत्वस्य व्यवस्थापितत्वात् अन्यथा सिंहो देवदत्त इति सामानाधिकरण्यं मुख्यं स्यात्। किञ्च आख्यातवाच्यः कर्त्तेतिवादिनोऽपि मते देवदत्तः पचतीति सामानाधिकरण्यं न मुख्यम्। तन्मते आख्यातेन तृतीयावन्निष्कृष्टशक्तिमात्ररूपकर्तृकारकाभिधानात् शक्तिमद्द्रव्यस्याकृत्यधिकरणन्यायेनानभिधानात् देवदत्तशब्देन च द्रव्यमात्राभिधानात् अतश्च भिन्नार्थनिष्ठत्वात् तन्मतेऽपि न मुख्यं सामानाधिकरण्यं किन्तु लाक्षणिकमेवेति न कश्चिद्विशेषः। न च लः कर्त्तरीति व्याकरणस्मृतिबलादाख्यातवाच्यः कर्त्तेति वाच्यम्। न हि वाच्यवाचकभावो व्याकरणस्मृत्यधीनः तस्य न्यायसहितान्वयव्यतिरेकगम्यत्वात् भवतु वा स्मृतिगम्यत्वात् भवतु वा स्मृतिगम्यस्तथापि नेयं स्मृतिः कर्त्तुराख्यातवाच्यत्वे प्रमाणं किन्तु कर्त्तुरेकत्वे एकवचनात्मको लकारः द्वित्वे द्विवचनात्मकः बहुत्वे बहुवचनात्मक इत्यस्मिन्नर्थे प्रमाणम्। द्व्येकयोर्द्विवचनैकवचने बहुषु बहुवचनमित्यनेनास्याः स्मृतेरेकवाक्यत्वात्। यत्तूक्तं कर्त्तुरनभिधाने देवदत्तेन पचतीति तृतीयाप्रसङ्ग इति तन्न। तृतीया हि कर्तृप्रतिपत्त्यर्थं तद्गतसंख्याप्रतिपत्त्यर्थं वा तत्र कर्त्ता तु भावनाक्षेपादेव लभ्यत इति न तत्र तृतीयापेक्षा तत्सङ्ख्या तु आख्यातेनैव प्रतीयत इति न तत्राप्यपेक्षा। यथाहुः। "सङ्ख्यायां कारके वा धोर्विभक्त्या हि प्रवर्त्तते। उभयं चात्र तल्लिङ्‌ भावना तिङ्विभक्तितः॥" इति।

यत्र तु नाख्यातेन तद्गता सङ्ख्योच्यते तत्र भवत्येव तृतीया यथा देवदत्तेन ओदनः पच्यत इति। तस्मान्न कर्त्तुरनभिधाने यत्किञ्चिद् दूषणमित्यलमतिविस्तरेण।

प्रकृतमनुसरामः। तस्मिद्वस्त्रिविधः श्रुतिविनियोगः। सेयं श्रुतिर्लिङ्गादिभ्यः प्रबलं प्रमाणम्। लिङ्गादिषु हि न प्रत्यक्षो विनियोजकः शब्दोऽस्ति किन्तु कल्प्यः। यावच्च तैर्विनियोजकः कल्प्यते तावत्प्रत्यक्षया श्रुत्या विनियोगस्य कृतत्वेन तेषां कल्पकत्वशक्तिर्विहन्यत इति श्रुतेः प्राबल्यमत एव ऐन्द्र्या गार्हपत्यमुपतिष्ठत इत्यत्र यावल्लिङ्गात् ऐन्द्र्या इन्द्रोपस्थानाङ्गत्वं कल्प्यते तावत् प्रत्यक्षया श्रुत्या गार्हपत्योपस्थानार्थत्वं क्रियत इति ऐन्द्रीगार्हपत्योपस्थानाङ्गम्।

सामर्थ्यं लिङ्गम्। यदाहुः "सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयत" इति। तेनाङ्गत्वं यथा बर्हिर्देवसदनंदामीत्यस्य लवनाङ्गत्वं स हि लवनं प्रकाशयितुं समर्थः। तच्च लिङ्गं द्विविधम्। सामान्यसम्बन्धबोधकप्रमाणान्तरापेक्षं तदनपेक्षञ्च। तत्र यदन्तरेण यन्न सम्भवत्येव तस्य तदङ्गत्वम्। तदनपेक्षं केवललिङ्गादेव यथा पदार्थज्ञानस्य कर्मानुष्ठानाङ्गत्वम्। न हि अर्थज्ञानमन्तरेणानुष्ठानं सम्भवति। यदन्तरेण यत् सम्भवति तस्य तदर्थत्वं तदपेक्षं यथोक्तस्य मन्त्रस्य लवनाङ्गत्वम्। लवनं हि मन्त्रं विनापि उपायान्तरेण स्मृत्वा कर्तुं शक्यमतो न मन्त्रो लवनस्वरूपार्थः सम्भवति किन्त्वपूर्वसाधनीभूतलवनप्रकाशनार्थः। तत्त्वञ्च न सामर्थ्यमात्रादवगम्यते लवनप्रकाशनमात्रे सामर्थ्यात् अतोऽवश्यं प्रकरणादिसामान्यसम्बन्धबोधकं स्वीकार्यम्। दर्शपूर्णमासप्रकरणे हि मन्त्रस्य पाठादेवमवगम्यते अनेन मन्त्रेण दर्शपूर्णमासापूर्वसम्बन्धि किञ्चित् प्रकाश्यते इति अन्यथा प्रकरणपाठवैयर्थ्यप्रसङ्गात्। किं तदपूर्वसम्बन्धि प्रकाश्यमित्यपेक्षायां सामर्थ्याद्बर्हिर्लवनमित्यवगम्यते। तद्धि बर्हिः संस्कारद्वारा अपूर्वसम्बन्धीति मन्त्रस्य सामर्थ्यात्तदर्थत्वे सति नानर्थक्यं प्रसज्यते। तस्माद्बर्हिर्देवसदनं

दामीत्यस्य प्रकरणाद्दर्शपूर्णमाससम्बन्धितयावगतस्य सामर्थ्याल्लवनाङ्गत्वमिति सिद्धम्। पूषानुमन्त्रणमन्त्राणान्तु यागानुमन्त्रणसमाख्यया यागसामान्यसम्बन्धेऽवगते सामर्थ्यात् पूषयागसम्बन्धोऽवगम्यते।

ननु तेषां यावत् समाख्यया पूषयागेन समान्यसम्बन्धोऽवगम्यते तावत् प्रकरणाद्दर्शपूर्णमासाभ्यामेव सामान्यसम्बन्धोऽवगतः समाख्यातस्तस्य बलीयस्त्वात्। अतएव पौरोडाशिकमिति समाख्याते ब्राह्मणे आम्नातानामपि प्रयाजानां प्रकरणात् सान्नाय्योपांशुयागाङ्गत्वमपि इत्युक्तम्। किञ्च यागानुमन्त्रणसमाख्ययापि न पूषयागेन सामान्यसम्बन्धोऽवगम्यते किन्तु यागमात्रेण प्रकरणेन तु दर्शपूर्णमासाभ्यामेव विशेषेण सम्बन्धोऽवगम्यते। अतः प्रकरणात् झटिति तत्सम्बन्धस्यैवावगतत्वात् तदर्थत्वमेव तेषां युक्तम्। पूषेति शब्दस्य पुषतीति व्युत्पत्त्या कथञ्चिदग्न्याद्यभिधायित्वात् मैवम्। पूषानुमन्त्रणमन्त्रे हि श्रूयमाणे एवमवगम्यते पूषाभिधानसमर्थत्वादयं मन्त्रस्तत्प्रकाशनार्थं इति लवनमन्त्र इव लवनप्रकाशनार्थः। न तत्र प्रकरणाद्यपेक्षा येन तेषामुपजीव्यत्वेन प्राबल्यं स्यात्। प्रकरणात्तु दर्शपूर्णमासार्थत्वे तस्य वाक्यलिङ्गश्रुतिकल्पनेन विनियोजकत्वात् लिङ्गस्योपजीव्यत्वेन प्राबल्यम्। अतो लिङ्गात् पूषप्रकाशनार्थत्वेऽवगते तन्मात्रप्रकाशनमनर्थकमित्यपूर्वप्रकाशनार्थत्वं वक्तव्यम्। किन्तदपूर्वमित्यपेक्षायां यागानुमन्त्रेण समाख्यानुगृहीताल्लिङ्गात् पूषयागापूर्वसम्बन्धिदेवताप्रकाशनार्थोऽयमित्यवगम्यते। अतो यद्यपि समाख्यातः प्रकरणं बलीयस्तथापि तस्य लिङ्गे न बाधितत्वात् समाख्याया दुर्बलाया अपि लिङ्गाश्रितत्वेन प्राबल्यात् सैव सामान्यसम्बन्धे प्रमाणं दुर्बलस्य प्रबलाश्रितस्य प्राबल्यात्। अतएव श्रुत्यपेक्षया दुर्बलाया

अपि स्मृतेराचमनरूपप्रबलपदार्थाश्रितत्वेन प्राबल्यात् पदार्थधर्मगुणभूतश्रौतक्रमत्यागेन वैदिकरणान्तरे श्रुते आचमनमेव कार्य्यमित्युक्तम्। यथाहुः। "अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः। दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैरिति"। यत्तु पूषेतिशब्दः कथञ्चिदग्न्याद्यभिधायीति तन्न तस्यादन्तको हि स इत्यादिवाक्यशेषेण वैदिकप्रसिद्ध्या च अर्थविशेषे रूढ़त्वात् रूढ़ेश्चावयवार्थालोचनसव्यपेक्षाद्योगाद्बलीयस्त्वात्। अतएव वर्षासु रथकारोऽग्नीनादधीतेत्यत्र रथकारशब्देन सौधन्वनापरपर्य्यायो वर्णविशेष उच्यते रूढ़िः प्राबल्यान्न तु रथं करोतीति व्युत्पत्त्या द्विजातयः योगस्य दौर्बल्यादित्युक्तं षष्ठे। तस्माद्युक्तं समाख्यया सामान्यसम्बन्धेऽवगमे सामर्थ्यात् पूषयागसम्बन्धः। पूषानुमन्त्रणमन्त्राणामिति। यथाहुः।

"यागानुमन्त्रणानीति समाख्या क्रतुयोजिका। तस्मात् शक्त्यनुरोधेन प्राप्तिस्तद्दैवते क्रताविति॥" तत्सिद्धं प्रमाणान्तरसिद्धसामान्यसम्बन्धस्य पदार्थविनियोजकं लिङ्गमिति। तत्र मन्त्रविनियोजकं लिङ्गं मुख्ये एवार्थे न गौणे मुख्यार्थस्य प्रथममुपस्थितत्वेन तत्रैव विनियोगबुद्धौ पर्य्यवसन्नायां पुनर्गौणेऽर्थे विनियोगकल्पनायां गौरवप्रसङ्गात्। अतएव बर्हिर्देवसदनं दामीतिमन्त्रः सामर्थ्यात् कुशलवनाङ्गं तेषां मुख्यत्वात् न उलपराजिलवनाङ्गमित्युक्तम्। तदिदं लिङ्गं, वाक्यादिभ्यो बलवत्। तेषां हि न साक्षाद्विनियोजकत्वं किन्तु श्रुतिं कल्पयित्वा न चासमर्थस्य श्रुतिं कल्पयित्वा विनियोगकल्पना सम्भवतीति। सामर्थ्यस्यापि कल्प्यत्वेनोपजीव्यत्वात् अतस्तैर्यावत्सामर्थ्यं कल्पयित्वा श्रुतिः कल्प्यते तावदेव क्लृप्तेन सामर्थ्येन श्रुतिं कल्पयित्वा विनियोगः क्रियते इति तस्य प्राबल्यम्। अतएव स्योनन्ते सदनं कृणोमि घृतस्य धारया

सुश्रेवं कल्पयामीत्यस्य सदनाङ्गत्वं लिङ्गात् । ननु वाक्यात्सदनाङ्गत्वं तस्य दौर्बल्यादिति समभिव्याहारो वाक्यम् ।

समभिव्याहारो नाम साध्यसाधनत्वादिवाचकद्वितीयाद्यभावे वस्तुतः शेषशेषिणोः सहोच्चारणं यथा यस्य पर्णमयी जुहूर्भवतीति । अत्र हि न द्वितीयादिविभक्तिः श्रूयते केवलं पर्णताजुह्वोः समभिव्याहारमात्रम् । तस्मादेव च पर्णताया जुह्वङ्गत्वं न चानर्थक्यं जुहूशब्देनापूर्वलक्षणात् तदयं वाक्यार्थः पर्णतया अवत्तहविर्धारणद्वारा पदपूर्वसाधनं तद्भावयेदिति । एवञ्च पर्णतया यदि जुहूः क्रियते तदैव तत्साध्यमपूर्वं भवति नान्यथेति गम्यते इति न पर्णताया वैयर्थ्यम् अवत्तहविर्धारणद्वारेति चावश्यं वक्तव्यम् । अन्यथा स्रुवादिषु अपि पर्णतापत्तेः । सा चेयं पर्णता नारभ्याधीता न सर्वत्र क्रतुषु गच्छति विकृतिषु चोदकेनापि प्राप्तिसम्भवेन द्विरुक्तत्वापत्तेः किन्तु प्रकृतिषु । तदुक्तं प्रकृतौ वा द्विरुक्तत्वादिति । अत्र विकृतिर्यतोऽङ्गानि गृह्णाति सा प्रकृतिरिति न प्रकृतिशब्देन विवक्षितं गृहमेधीयपर्णताया अप्राप्तिप्रसङ्गात् । न हि गृहमेधीयात् काचन विकृतिरङ्गानि गृह्णाति मानाभावात् । किन्तु चोदकाद्यत्राङ्गाप्राप्तिस्तत् कर्म प्रकृतिशब्देन विवक्षितम् । यथा दर्शपूर्णमासौ तत्र ह्यनचोदकादङ्गप्राप्तिः प्रकरणपठितैरेवाङ्गैर्नैराकाङ्क्ष्यात् गृहमेधीयादिषु अपि चोदकादङ्गप्राप्तिः क्लृप्तोपकारैरेव आज्यभागादिभिर्नैराकाङ्क्ष्यात् । अतो यत्र चोदकाप्रवृत्तिस्तत्रानारभ्याधीतानां सन्निवेशः साप्तदश्यत्वं नारभ्याधीतमपि न प्रकृतौ गच्छति प्रकृतेः पाञ्चदश्यावरोधात् । किन्तु विकृतिषु गच्छति तत्रापि न सर्वासु गच्छति चोदकप्राप्तपाञ्चदश्यबाधप्रसङ्गात् । किन्तु प्रत्यक्षश्रुतिसाप्तदश्यासु मित्रविन्दादिषु गच्छति । यथाह "एवञ्च प्रकृतावेतत् पाञ्चदश्यं प्रतिष्ठितम् । विकृतौ च न यत्रास्ति साप्त-

दर्शं पुनः श्रुतिरिति।" न च वाक्यवैयर्थ्यम् अनारभ्याधीतस्यैव सामदर्शस्य मित्रविन्दादिप्रकरणस्थेन वाक्येनोपसंहारात्। उपसंहारो नाम सामान्याप्राप्तस्य विशेषे नियमनम्। यथाहुः

"समानविधिरस्पष्टः संक्रियेत विशेषत इति।" तत्रानारभ्यविधिः सामान्यविधिः। मित्रविन्दादिप्रकरणस्थस्तु विशेषविधिरित्यास्तां तावत्।

प्रकृतमनुसरामः। तस्मिद्धं वाक्यादङ्गत्वं तद्धि वाक्यं प्रकरणाद्बलीयः। प्रकरणं हि न साक्षाद्विनियोजकं तद्धि आकाङ्क्षारूपम्। न च आकाङ्क्षा स्वयं प्रमाणम्। किन्तु साकाङ्क्षं वाक्यं दृष्ट्वा भवत्येतादृशी मतिः। नूनमिदं वाक्यं केनचित् वाक्येनैकवाक्यभूतमिति। ततश्च आकाङ्क्षारूपं प्रकरणवाक्यस्य वाक्यान्तरैकवाक्यत्वे प्रमाणम्। एवञ्च यावत् प्रकरणं वाक्यं कल्पयित्वा विनियोजकं भवति इति प्रकरणाद्वाक्यं बलीयः। अतएव इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्रातामित्यत्र इन्द्राग्नीपदस्य लिङ्गाद्दर्शाङ्गत्वे सिद्धे इदं हविरित्यादेरपि तदेकवाक्याद्दर्शाङ्गत्वं न तु प्रकरणाद्दर्शपूर्णमासाङ्गत्वं प्रकरणाद्वाक्यस्य बलीयस्त्वादिति उभयकाङ्क्षाप्रकरणम्। यथा प्रयाजादिषु समिधो यजतीत्यत्र हि इष्टविशेषस्यानिर्देशात् समिद्यागेन भावयेत् किमित्यस्त्युपकार्य्याकाङ्क्षा दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र दर्शपूर्णमासयागैः स्वर्गं कुर्य्यात् कथमित्यस्त्युपकाराकाङ्क्षेत्युपकार्य्योपकारकाकाङ्क्षारूपोभयाकाङ्क्षालक्षणप्रकरणेन प्रयाजानां दर्शपूर्णमासाङ्गत्वं सिध्यति।

ननु यदि प्रयाजादिवाक्ये इष्टविशेषो न श्रूयते तर्हि विश्वजिन्न्यायेन स्वर्गः फलं कल्प्यतां विश्वजिदधिकरणे हि विश्वजिता यजेतेत्यत्र फलस्याश्रवणात्। फलमन्तरेण च विधि-

श्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्ये सर्वाभिलषितत्वेन स्वर्गः फलमित्युक्तम्। तदुक्तं स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात् इति। रात्रिसत्रन्यायेनार्थवादिकं वा फलं कल्प्यतां रात्रिसत्राधिकरणे हि प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्तीत्यत्र विध्युद्देशे फलाश्रवणात्। फलमन्तरेण च विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्ये आर्थवादिकं प्रतिष्ठाख्यं फलमित्युक्तम्। विश्वजिदधिकरणन्यायेनानुपस्थितस्वर्गकल्पने तस्य प्रकृतसम्बन्धकल्पने गौरवादर्थवादोपस्थितस्यैव प्रकृतफलत्वकल्पने लाघवात्। तदुक्तं फलमात्रे तयोर्निर्देशादश्रुतौ हि अनुमानं स्यादिति। तस्माद्विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वा स्वतन्त्रफलार्थत्वे सम्भवति किमिति दर्शपूर्णमासाङ्गत्वं स्वीक्रियत इति चेन्नैवम्। स्वतन्त्रफलार्थत्वे अन्यतराकाङ्क्षया सम्बन्धः स्यात्। न हि अत्र फलत्वे साधनाकाङ्क्षास्ति। श्रूयमाणं हि फलं साधनमाक्षिपति। न चात्र तच्छ्रूयते एवञ्च फलस्याकाङ्क्षाभावात् केवलं किं भावयेदिति प्रयाजानां भाव्याकाङ्क्षयैव स्वतन्त्रफलार्थत्वं स्यात्। दर्शपूर्णमासार्थत्वे तु उभयाकाङ्क्षाप्रमाणं प्रयाजानां भाव्याकाङ्क्षाया इतरत्र कथम्भावाकाङ्क्षायाः सत्त्वात् अन्यतराकाङ्क्षातश्चोभयाकाङ्क्षा बलीयसीति वक्ष्यते।

ततश्च दर्शपूर्णमासार्थत्वमेव युक्तं न स्वतन्त्रफलार्थत्वमिति। तदुक्तं द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यादिति। अत्र द्रव्ये फलश्रुतिर्यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति इत्येवमाद्या संस्कारे फलश्रुतिर्यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते इत्येवमाद्या कर्मणि फलश्रुतिर्वर्म वा एतद् यज्ञस्य क्रियते तत् प्रयाजा इज्यन्त इत्याद्याः। कर्मपदञ्च आरादुपकारककर्मपरं द्रष्टव्यम्। संस्का-

रात् कर्मणः पृथक् च कीर्त्तनात् इत्यास्तां तावत्। तदिदं प्रकरणं क्रियाया एव विनियोजकं न द्रव्यगुणयोः। तयोस्तु क्रियायोगाद्विनियोजकं कुत इति चेत् शृणु। यजेत स्वर्गकाम इत्यत्राख्यातांशेनार्थी भावनोच्यते भावयेदिति सा चांशत्रयमपेक्षते किं भावयेत् केन भावयेत् कथं भावयेदिति। तत्र भाव्याकाङ्क्षायां षष्ठाद्यन्यायेन स्वर्गो भाव्यतयान्वेति स्वर्गं भावयेदिति। करणाकाङ्क्षायां समानपदोपात्तो यागो भावार्थाधिकरणन्यायेन करणतयान्वेति यागेन स्वर्गं भावयेदिति। ततः कथमिति कथम्भावाकाङ्क्षा जायते तस्यां चाकाङ्क्षायां यत्सन्निधौ पठितमश्रूयमाणफलकञ्च क्रियाजातं तदेवोपकार्य्याकाङ्क्षायाम् इतिकर्त्तव्यतात्वेनान्वयमनुभवितुं योग्यम्। क्रियाया एव लोके कथम्भावाकाङ्क्षायामन्वयदर्शनात्। न हि कुठारेण भिन्द्यादित्यत्र कथमित्याकाङ्क्षायां हस्त इति केवलमुच्चार्य्यमाणोऽपि हस्तोऽन्वयं प्राप्नोति। किं तर्हि हस्तेनोद्यम्य निपात्येत्युच्चार्य्यमाणे उद्यमननियमन एव हस्तोऽपि तद्द्वारेणैव अन्वयं प्राप्नोतीति सर्वजनीनमेतत्। किञ्च कथम्भावाकाङ्क्षा नाम करणगतप्रकाराकाङ्क्षा कथमः प्रकारवाचित्वात्। सामान्यस्य च भेदको विशेषः प्रकारः। सामान्यञ्च क्रियारूपमेव आख्यातेन उच्यते। यजेत स्वर्गकाम इत्यस्य हि अयमर्थः। यागेन तथा कुर्य्यात् यथा यागात् स्वर्गो भवति इति। क्रियासामान्यस्य च विशेषः क्रियैव भवति। न हि ब्राह्मणविशेषः परिव्राजकादिरब्राह्मणो भवति। एवञ्च करणगतक्रियाविशेषाकाङ्क्षापरनामधेयकथम्भावाकाङ्क्षायां क्रियैव अन्वेति इति युक्तम्। स च करणगतः क्रियाविशेषोऽन्वाधानादिब्राह्मणतर्पणान्तःक्रियारूप एव इति युक्तम्। तस्य प्रकरणेन ग्रहणं तस्य च करणगतत्वं करणोपकारकत्वमेव। तेन विना यागेन अपूर्वाजननात्। न हि

उद्यमननिपतनव्यतिरेकेण कुठारेण द्वैधीभावो जन्यते तस्मिद्धं कथम्भावाकाङ्क्षायां क्रियैव अन्वेति इति। अतएव द्रव्यदेवतयोर्योगसम्पादनद्वारा अन्वयः साम्प्रदायिकैरुक्तः। विकृतौ च कथम्भावाकाङ्क्षायामुपकारकसम्पादनमतिदिश्यत इत्युक्तम्। यदि च कथम्भावाकाङ्क्षायां सिद्धं वस्तु अन्वययोग्यं स्यात्। तदा उपकार्य्यसम्पादनपर्य्यन्तधावनं ग्रन्थकाराणामनर्थकं स्यात्। अतः क्रियाया एव इतिकर्त्तव्यतात्वं कथम्भावाकाङ्क्षागृहीतस्येतिकर्त्तव्यतात्वात्। इतिशब्दस्य प्रकारवाचित्वात् कर्त्तव्यस्येतिप्रकार इतिकर्त्तव्यता। प्रकारश्च सामान्यस्य भेदको विशेष इत्युक्तम्। कर्त्तव्यस्य च विशेषः कर्त्तव्य एव भवतीति न सिद्धस्य वस्तुन इतिकर्त्तव्यतात्वम् किन्तु क्रियाया एव। सिद्धस्य तु द्रव्यादेः केवलमङ्गत्वं तदपि श्रुत्यादिना नतु प्रकरणात्। यथाहुः,

नावान्तरक्रियायोगादृते वाक्योपकल्पितात्।
गुणद्रव्ये कथम्भावैर्गृह्णन्ति प्रकृताः क्रियाः॥ इति॥

अतएव वर्हिर्देवसदनं दामीत्यादिमन्त्राणां लिङ्गादङ्गत्वं नतु प्रकरणादित्युक्तम्। अर्थवादाधिकरणपूर्वपक्षसमाप्तौ राणके क्वचित्तु द्रव्यस्येतिकर्त्तव्यतात्वाभिधानमङ्गत्वाभिप्रायं द्रष्टव्यं बहुग्रन्थस्वरसादुक्तयुक्तेश्चेति तस्मिद्धं प्रकरणं क्रियाया एव विनियोजकम्। तच्च प्रकरणं द्विविधं महाप्रकरणमवान्तरप्रकरणञ्चेति तत्र फलभावनायाः प्रकरणं महाप्रकरणम्।

तच्च प्रयाजादीनां ग्राहकं तच्च प्रकृतावेव यत्र समग्राङ्गोपदेशः सा प्रकृतिः यथा दर्शपूर्णमासादिः। तत्रैव उभयाकाङ्क्षारूपं प्रकरणं सम्भवति इत्याकाङ्क्षानुपरमात् विकृतौ तु न प्रकरणं सम्भवतीति। यत्र न समग्राङ्गोपदेशः सा विकृतिः यथा सौर्य्यादिः तत्र यान्यपूर्वाण्यङ्गानि पठ्यन्ते उपहोमादीनि

तेषां न प्रकरणं विनियोजकं तत्र यद्यपि तेषां किं भावयेदित्यस्याकाङ्क्षा तथापि न प्रधानस्य कथम्भावाकाङ्क्षास्ति प्राकृतैरेवाङ्गैर्निराकाङ्क्षत्वात्। नच प्राकृतानामङ्गानामत्रापठितत्वेन अप्रत्यक्षत्वाद्वैकृतानान्तु पठितत्वेन प्रत्यक्षत्वात्तैरेव आकाङ्क्षोपशम इति वाच्यम्। तेषां पठितत्वेऽपि अक्लृप्तोपकारकत्वेन झटित्याकाङ्क्षोपशमनेऽसामर्थ्यात्। प्राकृतानान्तु क्लृप्तोपकारकत्वेन तच्छमने सामर्थ्यात्। नच अत्र तेषामुपस्थापकाभावः उपमितिलक्षणप्रमाणेन तेषां उपस्थितत्वात्। सौर्य्यवाक्ये हि दृष्टे औषधद्रव्यत्वेन एकदेवत्यत्वेन च सादृश्येन आग्नेयवाक्यमुपमीयते गवयदर्शनाद्गोरुपमानवत्। तस्मिंश्चोपमिते तेन तदर्थो ज्ञायते सा च त्र्यंशा भावना तत्र सौर्य्यवाक्ये भावनाया भाव्यकरणयोः सत्त्वात् इतिकर्त्तव्यताकाङ्क्षायां उपकारदृष्टभावेनाग्नेयेनेतिकर्त्तव्यतातिदिश्यते सौर्य्ययागेन ब्रह्मवर्चसं भावयेदाग्नेयवदिति। तथाच तयैवाकाङ्क्षोपरमान्न विकृतेः प्रकरणमस्ति अन्यतराकाङ्क्षारूपस्थानादेवच अपूर्वाङ्गग्रहणम्। नच प्राकृताङ्गग्रहणमेव विकृतौ प्रकरणात् किं न स्यादिति वाच्यम्। तेषामपि प्रकृत्युपकारकतयाकाङ्क्षोपशमात्।

ननु प्राकृतानामङ्गानामाकाङ्क्षाभावे तेषां विकृतिसम्बन्धः केवलं स्थानात् स्यात्। अपूर्वाणां त्वाकाङ्क्षासत्त्वात् विकृतेरपि आकाङ्क्षावत्त्वात्तेषां तत्सम्बन्धः प्रकरणात् स्यात्। प्रकरणञ्च स्थानात् झटिति विनियोजकमिति अपूर्वाणामेव प्रथमं सम्बन्धः स्यान्न प्राकृतानामिति उच्यते। सत्यं प्रकरणं झटिति विनियोजकं तथापि प्रमाणबलाबलात् प्रमेयबलाबलस्य ज्यायस्त्वात् उक्तविधयोपस्थितानां प्राकृतानामेव सम्बन्धो युक्तः प्रथमं प्रकृतौ क्लृप्तोपकारत्वात् न वैकृतानां

कल्प्योपकारत्वात्। विकृतेश्चोपकारकपदार्थाकाङ्क्षा न पदार्थमात्राणामिति युक्तः प्रथमं प्राकृतानामङ्गसम्बन्धः। ततश्च न विकृतौ प्रकरणं विनियोजकम्। यत्तु विकृतौ प्राकृताङ्गानुवादेन विधीयते यथा औदुम्बरो यूपो भवतीति यूपानुवादेन औदुम्बरत्वं तत् प्रकरणात् गृह्यते न तु तत्तत्प्रकरणात् गृह्यते अक्रियात्वात् क्रियाया एव प्रकरणग्राह्यत्वादिति चेत्। सत्यं तथापि तावद्विधीयमानस्य औदुम्बरत्वस्यास्त्येव आकाङ्क्षा किं भावयेदिति। नच यूपानवादेन तस्य विधीयमानत्वात् यूपस्य च अदृष्टरूपत्वात्तेनैव औदुम्बरत्वस्य नैराकाङ्क्ष्यं आहवनीयेनेवाधानस्येति वाच्यम्। यूपस्य केवलादृष्टरूपत्वाभावात्। तस्य हि तद्रूपत्वे खादिरत्वादिकं केवलादृष्टार्थं स्यात्। नच तत् सत्यं भवति। तथा सति खादिराभावेऽपि प्रतिनिधित्वेन कदरोपादानं न स्यात्। अदृष्टार्थस्य प्रतिनिध्यभावात्। न हि खदिरजन्यमदृष्टं कदरेण क्रियते इत्यत्र प्रमाणमस्ति। अतएव न अदृष्टार्थानां प्रतिनिधिः। तदुक्तं न देवताग्निशब्दक्रियमन्यार्थत्वादिति। प्रतिनिधित्वेन च उपादानं कदरादेरुक्तं ग्रन्थेषु। तस्मात् न यूपस्य केवलादृष्टरूपत्वम् अपितु दृष्टादृष्टसंस्कारगुणो यूप इति साम्प्रदायिकाः।

एवञ्च औदुम्बरत्वस्य न यूपमात्रेण नैराकाङ्क्ष्यं दृष्टसंस्कारस्य प्रकारान्तरेणापि सम्भवात्। अतश्च अस्ति औदुम्बरत्वस्य आकाङ्क्षा। विकृतेरपि अस्ति कथम्भावाकाङ्क्षा सा च तदा उपशाम्यति यदा उपकारास्तत्पृष्टभावेन च पदार्था अन्वीयन्ते। नतु उपकारमात्रान्वयेन शाम्यति। अतश्च यथा इन्द्रियभावनायाः करणाकाङ्क्षा दध्नः करणत्वेन अन्वये जाते सिद्धस्य करणत्वानुपपत्त्या होमस्य आश्रयत्वेन अन्वयः यावदनुवर्त्तते नतु दध्यन्वयमात्रेण निवर्त्तते। आश्रयत्वेन च गृह्यमाणो

होमः करणाकाङ्क्षयैव गृह्यत इत्युक्तं नतु आश्रयाकाङ्क्षा नाम चतुर्थ्यस्ति। एवं विकृतेः कथम्भावाकाङ्क्षा न उपकारान्वयमात्रेण निवर्त्तते उपकारपृष्ठभावेन यावत्पदार्थान्वयमनुवर्त्तते। अतश्चोपकारपृष्ठभावेन गृह्यमाणाः पदार्थाः कथम्भावाकाङ्क्षयैव गृह्यन्ते। तत्र प्राकृताः पदार्थाः कथम्भावाकाङ्क्षयैव गृह्यमाणा अपि न प्रकरणग्राह्याः प्रकृत्युपकारकतया तेषां आकाङ्क्षाभावात्। औदुम्बरत्वादयस्तु अन्यानुपकारकतया साकाङ्क्षाः पशुनियोजनयूपपृष्ठभावेन यावत् खादिरत्वमायाति तावत् विधीयन्त इति युक्तं तेषां प्रकरणात् ग्रहणम् उभयाकाङ्क्षासत्त्वात्। यदि हि यूपपृष्ठभावेन खादिरत्वं विहितं स्यात् ततो विकृतेराकाङ्क्षाभावात् औदुम्बरत्वं न प्रकरणग्राह्यं स्यात्। नच एतदस्ति चोदकस्य खादिरत्वाविषयत्वात्।

ननु यदि यावत् खादिरत्वमायाति तावदेव औदुम्बरत्वं विधीयते तदा तेन खादिरत्वबाधोऽप्राप्तबाधः स्यात् तार्त्तीयबाधवत्। तथाहि बाधो द्विविधः अप्राप्तबाधः प्राप्तबाधश्चेति। तत्र तार्त्तीयो बाधोऽप्राप्तबाधः। तत्र हि यावद् दुर्बलेन प्रमाणेन विनियोगः कर्त्तुमारभ्यते तावदेव प्रबलप्रमाणेन विनियोगः क्रियत इति तद्बोधितेनेतरबाधोऽप्राप्तबाधः दुर्बलप्रमाणस्य अक्लृप्तत्वात्। प्राकृतस्य त्वङ्गस्य विकृतौ चोदकप्राप्तस्य प्रत्याम्नानादर्थलोपात् प्रतिषेधाद्वा यो बाधः स प्राप्तबाधः यथा प्राकृतानां कुशानां प्रतिकूलशराम्नानात्। यथा वा अवघातस्य कृष्णलेषु वैतुष्यरूपप्रयोजनलोपात्। यथा वा पित्रेष्टौ होतृवरणस्य न होतारं वृणीत इति प्रतिषेधात् औदुम्बरत्वेन च खादिरत्वबाधः प्राप्तबाध एव वक्तव्यः शरकुशन्यायेन। चोदकस्य च खादिरत्वाविषयत्वे प्राप्त्यभावात् तदनुपपत्तिः स्यादिति।

उच्यते तार्त्तीयप्रमाणविनियुक्तेन इतरस्य बाधनं तावदप्राप्तबाधनम्। प्रकरणञ्च तार्त्तीयं तेन तद्विनियुक्तौदुम्बरत्वेन इतरस्य बाधनमप्राप्तबाध एव। न हि वैकृतेन प्राकृतबाधः प्राप्तबाध एवेति कुलधर्मः। वस्तुतस्तु प्राप्तबाध एवायम्। न च खादिरत्वस्य चोदकाविषयत्वेन प्राप्त्यभावात् कथं तद्बाधः प्राप्तबाधः तद्विषयत्वेन वा तेनैव नैराकांक्ष्यात् नौदुम्बरत्वे प्रकरणं विनियोजकं स्यादिति वाच्यम्। न हि प्राप्तबाधस्थले चोदकेन पदार्थाः प्राप्यन्ते। तथा सति शास्त्रप्राप्तत्वेन बाधो न स्यात्। किं तर्हि तानेव पदार्थान् वस्तुतः प्रापयति ये विकृतौ न बाध्यन्ते। ते च पदार्थाः प्रकृतिवच्छब्देन प्राप्यन्ते इति भवति पुरुषस्य भ्रान्तिः। यथा प्रकृतौ कृतं तथा विकृतौ कर्त्तव्यमिति सर्वे पदार्थाः प्राकृताः कर्त्तव्या इति। अतश्च भ्रान्तिप्राप्ताः खादिरत्वादयः शास्त्रप्रतिपन्नैरौदुम्बरत्वादिभिर्बाध्यन्ते इति भवति तद्बाधः प्राप्तबाधः। न च भ्रान्तिप्रतिपन्नेन वैधी आकांक्षा निवर्त्तयितुं शक्यते। तस्माद्युक्तमुक्तं उभयाकांक्षारूपप्रकरणसम्भवात् विकृतौ प्राकृताङ्गानुवादेन विधीयमानानामौदुम्बरत्वादीनां प्रकरणं विनियोजकमिति।

एवं पृषदाज्येनानुयाजान् यजतीति प्रकृतानुयाजानुवादेन विधीयमानं पृषदाज्यमपि प्रकरणाद्विकृत्यङ्गमिति केचिदाचार्य्याः। अस्मत्तातचरणास्तु एवमाहुः। पृषदाज्यं हि अनुयाजानुवादेन विधीयते तत्स्वरूपे च आनर्थक्यप्राप्तौ तेन विकृत्यपूर्वं लक्षयितुं युक्तं विप्रकर्षात्। किन्तु दीक्षणीया वाङ्नियमन्यायेन स्वापूर्वमेव लक्षयितुं युक्तं सन्निकर्षात्। अतएव उत्पवनादीनां प्रोक्षणाद्यपूर्वप्रयुक्तत्वमुक्तं नवमे। अतश्च विधीयमानस्य पृषदाज्यस्य वाक्यप्रतिपन्नेनानुयाजापूर्वेणैव नैराकांक्ष्यात् न प्रकरणाद्विकृत्यपूर्वार्थत्वमिति। वयन्तु अङ्गीकृत्यापि

विकृत्यर्थं ब्रूमः। भवतु वा विकृत्यर्थत्वं पृषदाज्यस्य तथापि न प्रकरणं विनियोजकं भवतीति यूपपृष्ठभावेन हि यावत् खादिरत्वमायाति तावदेवौदुम्बरत्वविधानादुभयाकांक्षायुक्तत्वाद् युक्तः प्रकरणविनियोगः।

एवं यावदनुयाजपृष्ठभावेनान्यमायाति तावदेव यदि पृषदाज्यं विधीयते तदोभयाकांक्षासम्भवात् प्रकरणविनियोगो भवेत्। नत्वेतदस्ति। न हि पृषदाज्यं नाम द्रव्यान्तरं किञ्चिदस्ति यदाज्यस्थानापन्नं विधीयते औदुम्बरत्वमिव खादिरत्वस्थानापन्नम्। पृषच्छब्दस्य पृषन्मणिरित्यादौ चित्रतावाचित्वेन दृष्टत्वात् पृषदाज्यशब्दस्य चित्राज्यवाचित्वात्। अतएव निगमेषु आज्यपानित्येव वक्तव्यं न तु पृषदाज्यपानित्येवमुक्तम्। न च यावत्प्राकृतमाज्यमायाति तावदेव चित्राज्यविधानात् प्रकरणाद्विनियोगः सम्भवतीति वाच्यम्। न हि पृषदाज्यशब्देन चित्रतागुणविशिष्टमाज्यं विधीयते विशिष्टविधाने गौरवापत्तेः। किन्तु प्राकृताज्यानुवादेन चित्रतागुणमात्रं विधीयते लोहितोष्णीषा ऋत्विजः प्रचरन्तीतिवत् तदुक्तं दशमे चतुर्थचरणान्ते। न वा गुणशास्त्रत्वादिति। प्राकृतस्यैवाज्यचित्रतागुणमात्रविधानमिति च शास्त्रदीपिका।

एवञ्च विकृतेः प्राकृतेनाज्येन क्लृप्तोपकारैश्चानुयाजैः नैराकांक्ष्ये पश्चाद्विधीयमानस्य चित्रतागुणस्योपहोमाद्यपूर्वाङ्गवत् न प्रकरणं विनियोजकं सम्भवति। यदि हि प्राकृतस्य कस्यचिद्गुणस्य स्थाने चित्रतागुणो विधीयेत तदा स गुणो यावदायाति तावद्विकृतेर्नैराकांक्ष्याभावात् चित्रतागुणस्य तावदेव विधानादुभयाकांक्षासम्भवात् प्रकरणविनियोगो भवेत्। न च तादृशः प्रकृतौ गुणोऽस्ति आज्यस्यानुयाजानाञ्च चित्रतागुणात् प्रागेव विधानात् तस्य तत्स्थानापन्नत्वाभावाच्च।

न च आज्यपृष्टभावेन यावत् प्राकृतं निर्गुणत्वमायाति ताव-देवास्य विधानात् प्रकरणसम्भव इति वाच्यम्। निर्गुणत्वस्या-विहितत्वेन पाणिकण्डूयनवदनङ्गत्वाद्विकृतेस्तदाकांक्षाभावात्। तथा हि ज्योतिष्टोमे दक्षिणादानसमयविहितकृष्णविषा-णात्यागस्य द्विरात्रादिषु चोदकप्राप्तस्य प्रथमेऽह्न्यननुष्ठानं उत्तरेऽह्नि दक्षिणादानपूर्वकालीनैः पदार्थैः कृष्णविषाण-कण्डूयनस्य शास्त्रविहितत्वेनापेक्षितत्वात् ज्योतिष्टोमे च दक्षि-णादानोत्तरकालं पाणिकण्डूयनं दृष्टमपि द्विरात्रादिषु प्रथमे-ऽह्नि अनुष्ठीयमानैर्दक्षिणादानकालीनैः पदार्थैर्नापेक्ष्यते तस्य प्रकृतावर्थसिद्धत्वेनाशास्त्रीयत्वादिति।

एवं निर्गुणत्वस्य अविहितत्वेन विकृतेस्तदपेक्षा नास्ति तस्मादुभयाकांक्षाया असम्भवात् पृषदाज्यस्य न प्रकरणवि-नियोगः सम्भवतीत्यलमतिविस्तरेण। तत्सिद्धं महाप्रकरणं प्रकृ-तावेव विनियोजकम्। विकृतौ तु यत् प्राकृतधर्मानुवादेन विधीयते तस्य विनियोजकं नतु केवलं विधीयमानस्य अपू-र्वाङ्गस्येति। यत्तु विकृतावपि प्राकृतधर्मानुवादेन विधीय-मानयोर्धर्मयोरन्तरालेऽपूर्वमपि अङ्गं केवलं पठ्यते तदपि प्रकरणेन विनियुज्यते। यद्यपि विकृतेः कथम्भावाकाङ्क्षा प्राकृतैरेवाङ्गैः शाम्यति तथापि यत्र प्राकृताङ्गानुवादेन धर्म-विधानं तत्र तद्विधानं यावद् भवति तावत् कथम्भावाकाङ्क्षा निवर्त्तते। अतो विकृतेराकाङ्क्षावत्त्वादन्तराले विहितस्य अपि अपूर्वस्य अङ्गस्य भाव्याकाङ्क्षासत्त्वात् युक्तं तस्य प्रकर-णात् प्रकृत्यर्थत्वम्। यथा आमनहोमेषु। ते हि प्राकृताङ्गानुवादेन विधीयमानयोर्धर्मयोरन्तराले विधीयन्ते इत्युक्तं तन्त्ररत्नादा-वित्यास्तां तावत्। फलभावनाया अन्तराले यदङ्गभावनायाः प्रकरणं तदवान्तरप्रकरणम्। तत्र अभिक्रमणादीनां प्रयाजा-

दिषु विनियोजकं तच्च सन्दंशेन ज्ञायते तदभावे अविशेषात् सर्वेषां फलभावनाकथम्भावेन ग्रहणात्। सन्दंशो नाम एकाङ्गानुवादेन विधीयमानयोरङ्गयोरन्तरालेन विहितत्वं यथाभिक्रमणम्। तद्धि समानयते जुह्वासु उपभृत इत्यादिना प्रयाजानुवादेन किञ्चिदङ्गं विधाय विधीयते पश्चादपि प्रयाजानुवादेन यो वै प्रयाजानां मिथुनं वेदेत्यादिना किञ्चिदङ्गं विधीयते। अतः प्रयाजाङ्गमध्ये पठितमभिक्रमणं तदङ्गं भवति। तत् कथम्भावाकाङ्क्षाया अशान्तेः। तदुक्तम्—

परप्रकरणस्थानामङ्गे श्रुत्यादिभिस्त्रिभिः।
ज्ञाते पुनश्च तैरेव सन्दंशेन तदिष्यत इति॥

न च अङ्गभावनायाः कथम्भावाकाङ्क्षाभावात् कथं प्रयाजभावनाकथम्भावेनाभिक्रमणं गृह्यत इति वाच्यम्। भावनासाम्येन सर्वत्र कथम्भावाकाङ्क्षायाः सत्त्वात्। प्रयाजैरपूर्वं कृत्वा यागोपकारं भावयेदित्युक्ते यो नाम न जानाति प्रयाजैरपूर्वं कर्त्तुं तस्य भवत्येव कथम्भावाकाङ्क्षा कथमेभिरपूर्वं कर्त्तव्यमिति। सा च सन्दंशपतितैर्वाचनिकैः स्मार्त्तैश्च आचमनादिभिः शाम्यति। तदभावे च स्वरूपनिष्पादनेन दर्विहोमन्यायेन निवर्त्तते। दर्विहोमेषु हि स्वरूपनिष्पादनातिरिक्तस्तथाव्यापारो न श्रूयते। नाप्यतिदेशेन तत्प्राप्तिः यागीयानां धर्माणां तावन्नातिदेशो यागत्वेन होमत्वेन वैलक्षण्यात्। नापि होमीयानां कस्य होमस्य धर्मः कस्मिन् होमे प्रवर्त्तते इति विशेषनिर्णये मानाभावात्। अतो धर्मप्राप्त्यभावात् दर्विहोमैरिष्टं भावयेत् कथमित्युत्पन्नापि आकाङ्क्षा स्वरूपनिष्पादनेनैव शाम्यति। एवं येषु अङ्गेषु सन्दंशाद्यभावः तत्र उत्पन्नापि साकाङ्क्षा तेनैव निवर्त्तते नतु सर्वथा तदभावः। तस्माद् युक्तमुक्तम् अभिक्रमणं प्रयाजाङ्गमिति। तच्चेदम्

अवान्तरप्रकरणं महाप्रकरणात् बलीयः। सन्दंशपतितानां धर्माणां कैमर्थ्याकाङ्क्षायां प्रधानापूर्वात् प्रयाजाद्यपूर्वस्य झटिति उपस्थितेरिति ।

प्रकृतमनुसरामः। तस्मिन्निदमुभयविधस्य प्रकरणस्य विनियोजकत्वम्। तदिदं स्थानादिप्रमाणात् प्रबलम्। यत्र हि स्थानादङ्गत्वं तत्रान्यतरस्य प्रकारान्तरेण निराकाङ्क्षत्वम्। न च साकाङ्क्षं निराकाङ्क्षेण सम्बद्धं योग्यं विनाकाङ्क्षोत्थापनेन। अतश्च अन्यतराकाङ्क्षया यावदुभयाकाङ्क्षारूपप्रकरणकल्पनद्वारा वाक्यादिकं कल्पयितुम् आरभ्यते तावत् झटिति प्रकरणेन वाक्यादिकं कल्पयित्वा विनियोगः क्रियत इति स्थानात् प्रकरणस्य बलीयस्त्वम्। अतएव विदेवनादयो धर्मा अभिषेचनीयसन्निधौ पठिता अपि नाभिषेचनीयस्य अङ्गम्। तेषां तदङ्गत्वं भवेत् स्थानात् नतु भवेत् प्रकरणात्। अभिषेचनीयस्य अव्यक्तचोदनाचोदितत्वेन ज्योतिष्टोमविकारत्वात् प्राकृतैरेव धर्मैर्निराकांक्षत्वात् किन्तु प्रकरणाद्राजसूयाङ्गम्।

ननु राजसूयेन स्वाराज्यकामो यजेतेत्यत्र राजसूयशब्दस्तावन्नामधेयत्वादाख्यातपरतन्त्रः यत्राख्यातं वर्त्तते तत्रैव वर्त्तते। न च दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र यथा दर्शपूर्णमासपदं नामधेयमपि नाख्यातपरतन्त्रं तत्र हि यजेतेत्यत्राख्यातं अविशेषात् सर्वानेव प्राकृतानाग्नेयादीन् प्रयाजादींश्चाभिधातुं समर्थं दर्शपूर्णमासपदं त्वाग्नेयादीनेव वदति न सर्वान् अतश्च न तदाख्यातपरतन्त्रं तथा राजसूयपदमपि किं न स्यादिति वाच्यम्। प्रसिद्धेन हि पदेनाप्रसिद्धं निर्णीयते। यथाहुः—

पदमज्ञातसन्दिग्धं प्रसिद्धैरपृथक्श्रुति।

निर्णीयते निरूढ़न्तु न स्वार्थादपनीयते॥ इति।

दर्शपूर्णमासपदन्तु कालनिमित्तं तद्योगश्चाग्नेयादिषूत्पत्तिवाक्यैरवगतः। अतस्तद्वाचित्वेन दर्शपूर्णमासपदं प्रसिद्धम्। न चाग्नेयादीनां बहुत्वाद् द्विवचनान्तत्वमस्यानुपपन्नमिति वाच्यम्। विद्वद्वाक्यद्वयसिद्धसमुदायद्वयाभिप्रायेण तदुपपत्तेः।

एवञ्च दर्शपूर्णमासपदस्याग्नेयादिवाचित्वे निर्णीते यजेतेत्याख्यातमपि तानेव वदति न हि तदुक्तौ स्वार्थत्यागो भवति राजसूयपदं त्वनिर्णीतार्थं अतस्तदाख्यातपरतन्त्रमेव तच्चाविशेषात् सर्वेष्विष्टिपशुसोमेषु वर्त्तते तत्परतन्त्रत्वाद्राजसूयपदमपि तानेव वदति। न च राजसूयशब्दस्य राजा सूयते यत्रेति व्युत्पत्त्या सोमाभिषवनिमित्तत्वात्तस्य च सोमभिषुणोतीतिवाक्येन सोमयागे अवगतत्वात्तद्वाचित्वमेव नेष्टिपशुवाचित्वमिति वाच्यम्। न ह्यभिषेचनीयादिसोमयागेषु अभिषवः प्रत्यक्षेण वाक्येन चोदितोऽस्ति तद्वाक्यस्य ज्योतिष्टोमे सत्त्वात्। अतिदेशात्तत्सम्बन्धोऽवगत इति चेन्न। अतिदेशस्य फलसम्बन्धोत्तरकालीनत्वेन राजसूयेन स्वाराज्यकामो यजेतेत्येतद्वाक्यार्थावगत्युत्तरकालीनत्वात्। अनेन हि वाक्येन फलसम्बन्धे बोधिते पश्चात् कथम्भावाकांक्षायामतिदेशकल्पनासम्भवात् अतस्ततः प्रागेवैतद्वाक्यार्थो वर्णनीयः। तदा चाभिषवस्यानवगतत्वाद्राजसूयपदमप्रसिद्धार्थमेव। अतएव राजसूयपदमव्युत्पन्नमश्वकर्णशब्दवदित्युक्तं साम्प्रदायिकैः।

एवञ्चासिद्धार्थत्वेनाख्यातपरतन्त्रत्वाद्राजसूयपदेनेष्टिपशुसोमयागा उच्यन्ते। ते च तैस्तैः प्राकृतैर्धर्म्मैर्निराकांक्षा इति न प्रकरणं विदेवनादीनां राजसूये विनियोजकं उभयाकांक्षाया अभावात्। न च प्रातिस्विकरूपैर्नैराकांक्षेऽपि न राजसूय-

त्वेन रूपेण नैराकांक्ष्यमिति वाच्यम्। आकांक्षाद्वये प्रमाणाभावात्। किञ्च प्रातिस्विकरूपैर्या कथम्भावाकांक्षा सापि फलसम्बन्धोत्तरकालं सा च राजसूयत्वेन न तु प्रातिस्विकरूपैः। राजसूयत्वेन च फलसम्बन्धे उत्पन्नायाः कथम्भावाकांक्षाया विदेवनादिभिः शान्तेरतिदेशकल्पनमेव न स्यात्। यदि हि सामान्यरूपेण प्रातिस्विकरूपेण च फलसम्बन्धविधायकवाक्यद्वयं भवेत् तदा युज्येताकांक्षाद्वयानुसारेण विदेवनादीनामातिदेशिकादीनाञ्चाङ्गानां सम्बन्धो न तु तदस्ति। तस्मात् प्राकृतधर्मैर्नैराकांक्ष्यान्न विदेवनादीनां प्रकरणं विनियोजकमिति चेत् सत्यम्। अतएव साम्प्रदायिकैर्विदेवनादीनां सन्दंशो दर्शितः। राजसूयत्वपुरस्कारेण ये धर्मा विधीयन्ते राजसूयाय स्तोना उत्पुनाति इत्येवमादयः तन्मध्ये विदेवनादयः पठ्यन्ते अतस्ते सर्वे राजसूयाङ्गं प्रयाजानुवादेन विधीयमानधर्ममध्ये पठितं प्रयाजाभिक्रमणवत्। तस्माद्युक्तमुक्तं विदेवनादीनां प्रकरणाद्राजसूयाङ्गत्वमिति तत्सिद्धं प्रकरणस्य स्थानाद्बलीयस्त्वमिति।

देशसामान्यं स्थानं तच्च द्विविधं पाठसादेश्यमनुष्ठानसादेश्यञ्चेति। यथाहुः—

तत्र क्रमो द्विधैवेष्टो देशसामान्यलक्षणः।
पाठानुष्ठानसादेश्याद्विनियोगस्य कारणमिति॥

स्थानं क्रमश्चेत्यनर्थान्तरम्। पाठसादेश्यमपि द्विविधं यथासङ्ख्यपाठः सन्निधिपाठश्चेति। तत्र ऐन्द्राग्नमेकादशकपालं निर्वपेद्वैश्वानरं द्वादशकपालं निर्वपेदित्येवंक्रमविहितेष्टिषु इन्द्राग्नी रोचनादिव इत्यादीनां याज्यानुवाक्ययुगलानां मन्त्राणां यथासङ्ख्यं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येवं यो विनियोगः स यथासङ्ख्यपाठात् प्रथमपठितमन्त्रस्य हि कैमर्थ्याकांक्षायां

प्रथमतो विहितमेव कर्म प्रथममुपतिष्ठते सामान्यदेशत्वात्। यानि तु वैकृतान्यङ्गानि प्राकृताङ्गानुवादेन विहितानि सन्दंशपतितानि तेषां विकृत्यर्थत्वं सन्निधिपाठात्। तेषां हि कैमर्थ्याकाङ्क्षायां फलवद्विकृत्यपूर्वमेव भाव्यत्वेन सम्बध्यते उपस्थितत्वात्। अतएव तेषु न विश्वजिन्न्यायावतारः स्वतन्त्रफलार्थत्वे विकृतिसन्निधिपाठानर्थक्यापत्तेश्च। पशुधर्माणामग्नीषोमीयार्थत्वमनुष्ठानसादेश्यात् औपवसथ्येऽह्नि अग्निषोमीयः पशुरनुष्ठीयते तस्मिन्नेव दिने ते धर्माः पठ्यन्ते अतस्तेषां कैमर्थ्याकाङ्क्षायां अनुष्ठेयत्वेनोपस्थितं पश्वपूर्वमेव भाव्यत्वेन सम्बध्यते। अतो युक्तमनुष्ठानसादेश्यात्तदर्थत्वं तेषाम्। न च पाठसादेश्यादेव तत् किं न स्यादिति वाच्यम्। अग्नीषोमीयस्य पशोः क्रयसन्निधौ पाठात्। न च क्रयसन्निधौ पाठे तदनुष्ठानमपि तत्र स्यादिति वाच्यम्। स एष द्विदैवत्यः पशुरौपवसथ्येऽह्नि आलब्धव्य इति वचनात्तदनुपपत्तेः। न च स्थानात् प्रकरणस्य बलीयस्त्वेन पशुप्रमापाठानां धर्माणां ज्योतिष्टोमार्थत्वमेव किं न स्यादिति वाच्यम्। तस्य सोमयागत्वेन पशुधर्मग्रहणे अयोग्यत्वात्। अत आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायात् स्थानात् पशुयागार्थत्वमेव धर्माणां युक्तम्। न च तेषां तदर्थत्वं प्रकरणादेव किं न स्यादिति वाच्यम्। अग्निषोमीयकथम्भावाकाङ्क्षायाः कृप्तोपकारैः प्राकृतधर्मैरेवापशान्तत्वात्। स हि सान्नाय्ययागप्रकृतिक उभयोः पशुप्रभवत्वसामान्यात्। तदुक्तं सान्नाय्यं वा तत्प्रभवत्वादिति। सान्नाय्यं दधिपयसी तत्रापि पशुयागः पयोयागप्रकृतिकः साक्षात्पशुप्रभवत्वात्। अतश्चोदकप्राप्तैस्तद्धर्मैर्निराकाङ्क्षत्वात् न पशुयागे धर्माणां प्रकरणं विनियोजकं किन्तु स्थानमेव। तदेवं निरूपितः संक्षेपतः स्थानविनियोगः।

तच्च समाख्यातः प्रबलं स्थानविनियोगे हि पदार्थयोर्देश-

सामान्यलक्षणः सम्बन्धः प्रत्यक्षः। समाख्याविनियोगे तु सम्बोन्ध न प्रत्यक्षः पदार्थयोर्भिन्नदेशत्वात्। न च सा सम्बन्धवाचिका यौगिकानां शब्दानां द्रव्यवाचकत्वेन सम्बन्धावाचकत्वात्। तथाहि, समाख्या सम्बन्धसामान्यवाचिका स्यात् विशेषवाचिका वा? नाद्यः। तदुक्तौ प्रयोजनाभावात् सर्वयौगिकशब्दानां पर्य्यायत्वापत्तेश्च। द्वितीयेऽवश्यं सम्बन्धिनौ वाच्यौ तदन्तरेण सम्बन्धे विशेषाभावात् तत्प्रतिपत्तिमन्तरेण तदप्रतिपत्तेश्च। अतश्चावश्यं सम्बन्धिवाचकत्वं समाख्याया वक्तव्यम्। तथाचं न सम्बन्धवाचकत्वं सम्बन्धिप्रतिपत्त्यैव वाक्यार्थप्रतिपत्तिन्यायेन तत्प्रतिपत्तिसम्भवे तत्र शक्तिकल्पने गौरवात्। यथाहुः।

सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते।
न हि सम्बन्धवाच्यत्वं सम्भवत्यतिगौरवात् इति॥

तथा—

पाकन्तु पचिरेवाह कर्त्तारं प्रत्ययस्तथा।
पाकयुक्तः पुनः कर्त्ता वाच्यो नैकस्य कस्यचित्॥ इति।

तथाच न समाख्या सम्बन्धवाचिका। हौत्रचमस इत्यादिका तु वैदिकी समाख्या निषादस्थपतिशब्दवत् न षष्ठ्यर्थसम्बन्धवाचिका नापि वाक्यवत्तद्वाचिका तस्याः पदत्वेन अप्रमाणत्वात्। पौरोडाशिकमित्यादिसमाख्यास्तु अतिदुर्बलाः लौकिकत्वेन पुरुषप्रत्ययसापेक्षत्वात्। काण्डगोचरत्वेन तत्तत्पदार्थगोचरत्वाच्च। काण्डवाचकत्वमपि न काण्डत्वेन किन्तु पौरोडाशिकत्वादिनैव। नह्येकहायनीशब्दो द्रव्यवाचकोऽपि गोत्वेन तद्वदिति किं तर्हि एकहायनीत्वेनैव। स्थानविनियोगे तु पदार्थयोर्विशेषपुरस्कारेणैव सम्बन्धः प्रत्यक्षप्रमाणप्रतिपन्नः। अतश्च समाख्यासुपलभ्य नूनमनयोः पदार्थयोः सम्बन्धोऽस्तीति यावत्कल्प्यते तावत् प्रत्यक्षप्रतिपन्नेन सम्बन्धेन परस्परसाकाङ्क्षा कल्प्यते तद-

भावे सम्बन्धानुपपत्तेः। कल्पितसम्बन्धेन च यावदितरत्रा-काङ्क्षादि कल्प्यते तावदन्यत्राकाङ्क्षया वाक्यादिकल्पनया विनि-योगः क्रियते। इति सिद्धं स्थानस्य समाख्यातः प्राबल्यम्। अतएव शुन्धनमन्त्रः सान्नाय्यपात्राङ्गं पाठसादेश्यात्। न तु पौरोडाशिकसमाख्यया पुरोडाशपात्राङ्गमिति।

समाख्या यौगिकः शब्दः। सा च द्विधा। वैदिकी लौकिकी च। तत्र होतुश्चमसभक्षणाङ्गत्वं होतृचमस इति वैदिक्या समा-ख्यया अध्वर्योस्तत्तत्पदार्थाङ्गत्वं लौकिक्या आध्वर्य्यवमिति समा-ख्ययेति संक्षेपः। तदेवं निरूपितानि संक्षेपतः श्रुत्यादीनि षट् प्रमाणानि। एतत्सहकृतेन विनियोगविधिना समिदा-दिभिरुपकृत्य दर्शपूर्णमासाभ्यां यजेतेत्येवंरूपेण यानि विनि-युज्यन्ते तान्यङ्गानि। तानि द्विविधानि सिद्धरूपाणि क्रियारूपाणि चेति। तत्र सिद्धानि जातिद्रव्यसंख्यादीनि। तानि च दृष्टार्थान्येव। क्रियारूपाणि च द्विविधानि गुणकर्माणि प्रधानकर्माणि चेति। एतान्येव सन्निपत्योपकारकाणि आरा-दुपकारकाणीति चोच्यन्ते। तत्र कर्माङ्गद्रव्योद्देशेन विधी-यमानं कर्म सन्निपत्योपकारकम्। यथा अवघातप्रोक्षणादि। तच्च दृष्टार्थमदृष्टार्थं दृष्टादृष्टार्थञ्च। दृष्टार्थमवघातादि। अदृ-ष्टार्थं प्रोक्षणादि। दृष्टादृष्टार्थं पशुपुरोडाशयागादि। तच्च द्रव्य-त्यागांशेनादृष्टं देवतोद्देशेन च देवतास्मरणं दृष्टं करोति। इदमेव सामवायिकं कर्मेत्युच्यते। तच्च सन्निपत्योपकारकं द्विविधम्। उपयोक्ष्यमाणार्थमुपयुक्तार्थञ्चेति। तत्रावघातप्रोक्षणाद्युपयो-क्ष्यमाणार्थम्। व्रीहीणां यागे उपयोक्ष्यमाणत्वात्। प्रतिपत्ति-कर्म इडाभक्षणादि उपयुक्तपुरोडाशसंस्कारकम्। उपयुक्तस्या-कीर्णकरणतानिवर्त्तकं कर्म प्रतिपत्तिकर्म। उपयुक्तसंस्कारार्थञ्च कर्म उपयोक्ष्यमाणसंस्कारार्थाद् दुर्बलम्। उपयुक्तापेक्षया उप-

योक्ष्यमाणेऽत्यादरात्। अतएव प्राणीयनिष्कासे उदयनीयमनुनिर्वपतीत्यत्र निष्कासस्य निर्वापार्थत्वम्। न तु तस्य तदर्थत्वं निष्कासस्योपयुक्तत्वादित्युक्तमेकादशे। तच्च सन्निपत्योपकारकं आरादुपकारकाद्बलीयः।

ननु अवघातादि नाम भवतु बलीयः तस्य दृष्टार्थत्वात् आरादुपकारकस्य चादृष्टार्थत्वात् दृष्टे च सम्भवति अदृष्टार्थस्य अन्याय्यत्वात्। प्रोक्षणादि सन्निपत्योपकारकन्तु कथं बलीयः उभयोरदृष्टार्थत्वाविशेषात्। किञ्च आरादुपकारकं साक्षात्प्रधानाङ्गं तस्यान्योद्देशेनाविधानात्। सन्निपत्योपकारकन्तु अङ्गाङ्गं कर्माङ्गव्रीह्याद्युद्देशेन विधानात्। अङ्गाङ्गापेक्षया च साक्षादङ्गं बलीयः। अङ्गगुणविरोधे तादर्थ्यादिति न्यायात्। अतएव इष्ट्या पशुना सोमेन यजेत सोमावास्यायां पौर्णमास्यां वा यजेतेत्यविशेषविधाने पर्वानुग्रहः सोमयागस्यैव क्रियते न तद्दीक्षणीयादेः। अतः कथं सन्निपत्योपकारकस्य बलीयस्त्वम्। उच्यते। सत्यप्यदृष्टार्थत्वाविशेषे सन्निपत्योपकारकमारादुपकारकाद्बलीयः। सन्निपत्योपकारके हि कर्मणि उपकार्योपकारकयोर्व्रीहिप्रोक्षणयोः सम्बन्धो वाक्यक्लृप्तः उपकारमात्रन्तु कल्प्यम्। आरादुपकारकस्थले तु दर्शपूर्णमासप्रयाजयोः सम्बन्धः कल्प्य उपकारोऽपि।

किञ्च आरादुपकारकस्थले हि प्रकरणं विनियोजकम्। इतरत्र तु व्रीहीन् प्रोक्षतीति वाक्यमेव व्रीहिपदेनापूर्वसाधनलक्षणं कृत्वा क्रतौ विनियोजकमिति बलीयस्त्वम्। यच्चोक्तं अङ्गगुणविरोधे तादर्थ्यादिति न्यायेन दुर्बलत्वमिति। तदसत्। न हि व्रीह्याद्युद्देशेन विधीयमानं प्रोक्षणादि तदर्थं भवति तत्स्वरूपे आनर्थक्यात्। किन्तु तत्संस्कारद्वारा क्रत्वर्थमेव सन्निपत्योपकारकाणामुत्पत्त्यपूर्वप्रयुक्तत्वस्य वक्ष्यमाणत्वात्। अत उभ-

यद्विविधमप्यङ्गजातं क्रत्वर्थमेवेति नाङ्गगुणविरोधन्यायावतारः। दीक्षणीयादेः पर्वानुग्रहस्तु दीक्षणीयाद्यर्थ एव तस्य तदपूर्वप्रयुक्तत्वात्। अतो युक्तं साक्षात्प्रधानाङ्गेन पर्वानुग्रहेण स बाध्यत इति। तत् सिद्धं सन्निपत्योपकारकाङ्गलीयस्त्वम्। अतएव स्थाणौ स्वा एवाहुतिं जुहोतीति विहितास्था एवाहुतिर्यूपा व्रश्चनेति स्थाणुद्वारा यूपसंस्कारार्था देवदत्तधारितायाः स्रजः शुचिदेशविधानमिव देवदत्तसंस्कारार्थम्। न तु स्वास्वाहुतिरारादुपकारिकेत्युक्तं दशम इति दिक्। द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकं यथा प्रयाजादि। तदेवं निरूपितं द्विविधमप्यङ्गजातम्।

तच्च न यागस्वरूपप्रयुक्तं स्वरूपे आनर्थक्यात् तदन्तरेणापि तत्सिद्धेः। किन्त्वपूर्वप्रयुक्तमेव। न हि तदन्तरेणापूर्वं भवतीत्यत्र किञ्चित्प्रमाणमस्ति तस्यादृष्टत्वात्। न चैवं प्राधान्याददृष्टत्वाच्च फलप्रयुक्तत्वमेव किं न स्यादिति वाच्यम्। फलभावनायां यागस्य करणत्वात्। अङ्गानाञ्च करणानुग्राहकत्वात् तदर्थत्वे बुद्धे तत्र चानर्थक्यप्रसक्तौ तेन यागेन स्वापूर्वमेवोपस्थाप्यते सन्निकर्षात् दीक्षणीयादिशब्देनेव तदपूर्वम्। न तु फलमुपस्थाप्यते विप्रकर्षात्। अतो न तत्प्रयुक्तत्वमङ्गानाम्। अतएव अगन्मसुवः सुवरगन्मेति मन्त्रो विकृतावूहितव्य इत्युक्तं नवमे। फलदेवतयोश्चेत्यत्र फलप्रयुक्तत्वे तु सौर्यादिविकृतिषु स्वर्गरूपफलाभावात् मन्त्रा न प्रवर्त्तेत नितरांचोहितव्यः स्यादिति। तत्सिद्धमङ्गानामन्यप्रयुक्तत्वानुपपत्तेरपूर्वप्रयुक्तत्वम्।

तत्रापि सन्निपत्योपकारकाणां द्रव्यदेवतादिसंस्कारद्वारा यागस्वरूपे उपयोगादुत्पत्त्यपूर्वार्थत्वम्। अतएव औषधधर्मविघातादीनामाज्येऽप्रवृत्तिः तेषामाग्नेयापूर्वप्रयुक्तत्वात्। आज्यस्य

च तदर्थत्वाभावादित्युक्तं द्वितीये। आरादुपकारकाणान्तु स्वरूपेऽनुपयोगात् परमापूर्वार्थत्वम्। तत्रोत्पत्त्यपूर्वस्य यागस्वरूपानुष्ठानानन्तरमेवोत्पद्यमानत्वात् सन्निपत्योपकारकाणां पूर्वाङ्गानां तदुत्पत्तावुपयोगः उत्तराङ्गानान्तु तेषां तत्स्थितावुपयोगः। परमापूर्वस्य तु साङ्गप्रयोगानुष्ठानानन्तरमेव उत्पद्यमानत्वात् सर्वेषां आरादुपकारकाणां तदुत्पत्तौ प्रयोगबहिर्भूतस्य तु तत्स्थितावुपयोगः। यथा बृहस्पतिसवस्य वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति वाजपेयोत्तरकालमङ्गत्वेन विहितस्य वाजपेयापूर्वस्थितावुपयोगः तस्य प्रागेवोत्पन्नत्वादित्युक्तं चतुर्थे। तत्सिद्धं सर्वथाङ्गानामपूर्वार्थत्वम्।

प्रकृतमनुसरामः। तदेवं निरूपितः संक्षेपतो विनियोगविधिः। प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः। स चाङ्गवाक्यैकवाक्यतामापन्नः प्रधानविधिरेव। स हि साङ्गं प्रधानमनुष्ठापयन् विलम्बे प्रमाणाभावात् अविलम्बापरपर्य्यायं प्रयोगप्राशुभावं विधत्ते। न च विलम्बवदविलम्बेऽपि प्रमाणाभाव इति वाच्यम्। विलम्बे हि अङ्गप्रधानविध्येकवाक्यतावगततत्साहित्यानुपपत्तिः प्रसज्यते। न हि विलम्बेन क्रियमाणयोः पदार्थयोः सहकृतामतिसाहित्यं व्यवहरन्ति। न च एवं साहित्यानुपपत्त्या समकालत्वमेव स्यान्नत्वविलम्बः। अव्यवधानेन पूर्वोत्तरकालक्रियमाणयोः पदार्थयोरविलम्बेन कृतमिति व्यवहारादिति वाच्यम्। अनेकपदार्थानामेकस्मिन् कालेऽनुष्ठानानुपपत्तेः। न च तावत्कर्तृसम्प्रतिपादनेनानुष्ठानं किं न स्यादिति वाच्यम्। तस्यैतस्य यज्ञकर्त्तुश्चत्वार ऋत्विज इत्यादिना कर्त्तॄणां नियतत्वात् तस्मादङ्गवाक्यैक्यतामापन्नः प्रधानविधिरेकवाक्यावगततत्साहित्यं विदधदुक्तविधया एककालानुष्ठानानुपपत्तेरविलम्बं विधत्ते। इति सिद्धं प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिरिति।

स च अविलम्बो नियते क्रमे आश्रियमाणे भवति। अन्यथा हि किमेतदनन्तरमेतत् कर्त्तव्यमेतदनन्तरमेवेति प्रयोगविच्छेदापत्तेः। अतः प्रयोगविधिरेव स्वाविषयप्रयोगप्राशुभावसिद्ध्यर्थं नियतक्रममपि पदार्थविशेषणतया विधत्ते। तत्र क्रमो नाम विततिविशेषः पौर्वापर्य्यरूपो वा। तत्र च षट् प्रमाणानि श्रुत्यर्थपठनस्थानमुख्यप्रवृत्त्याख्यानि। तत्र क्रमपरं वचनं श्रुतिः। तद्द्विविधं केवल क्रमपरं तद्विशिष्टपदार्थपरञ्चेति तत्र वेदं कृत्वा वेदीं करोतीति केवलक्रमपरं वेदिकरणादेर्वचनान्तरेण विहितत्वात्। वषट्कर्त्तुः प्रथमभक्ष इति तु क्रमविशिष्टपदार्थपरं एकप्रसरताभङ्गभयेन भक्ष्यानुवादेन क्रममात्रस्य विधातुमशक्यत्वात्। सेयं श्रुतिरितरप्रमाणापेक्षया बलवती। तेषां वचनकल्पनद्वारा क्रमप्रमाणत्वात्। अतएव आश्विनस्य पाठक्रमात् तृतीयस्थाने ग्रहणप्रसक्तौ आश्विनो दशमो गृह्यत इति वचनात् दशमस्थाने ग्रहणमित्युक्तम्।

यत्र तु प्रयोजनवशेन निर्णयः स आर्थक्रमः। यथाग्निहोत्रहोमयवागूपाकयोः। अत्र हि यवाग्वा होमार्थत्वेन तत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते। स चायं पाठक्रमाद्बलवान्। यथापाठं ह्यनुष्ठाने क्रमप्रयोजनबाधः अदृष्टार्थत्वञ्च स्यात्। न हि होमानन्तरं क्रियमाणस्य किञ्चिद्दृष्टं प्रयोजनमस्ति।

पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः। तस्माच्च पदार्थानां क्रम आश्रीयते येनेह क्रमेण वाक्यानि पठितानि तेनैव क्रमेणाधीतानि अर्थप्रत्ययं जनयन्ति यथार्थप्रत्ययञ्च पदार्थानामनुष्ठानात्। स च पाठो द्विविधो मन्त्रपाठो ब्राह्मणपाठश्चेति। तत्राग्नेयाग्नीषोमीययोस्त्याजानुवाक्यानां क्रमात् यः क्रम आश्रीयते स मन्त्रपाठक्रमात्। स चायं मन्त्रपाठो ब्राह्म-

णपाठक्रमाद्बलवान् अनुष्ठाने। ब्राह्मणवाक्यापेक्षया मन्त्रवाक्यस्यान्तरङ्गत्वात्। ब्राह्मणवाक्यं हि प्रयोगाद्बहिरेवेदमेवं कर्त्तव्यमित्येवमवबोध्य कृतार्थमिति न पुनः प्रयोगकाले व्याप्रियते। मन्त्राः पुनः अनन्यप्रयोजनाः प्रयोगसमवेतार्थस्मारका इति वक्ष्यामः। तेनानुष्ठानक्रमस्य स्मरणक्रमाधीनत्वात् तत्क्रमस्य च मन्त्रक्रमाधीनत्वादन्तरङ्गो मन्त्रपाठ इतरस्मादिति बलवान्। अतएव आग्नेयाग्नीषोमयोर्ब्राह्मणपाठादादावग्नीषोमीयानुष्ठानं पश्चादाग्नेयानुष्ठानमित्येवक्रमं बाधित्वा मन्त्रपाठादादावाग्नेयानुष्ठानं पश्चादग्नीषोमीयस्येत्युक्तम्।

प्रयाजानां समिधो यजति तनूनपातं यजतीत्येवं विधायकवाक्यक्रमाद् यः क्रमः स ब्राह्मणपाठक्रमः। अत्र च यद्यपि ब्राह्मणवाक्यान्यर्थं विधाय कृतार्थानि तथापि प्रयाजानां स्मारकान्तरस्याभावात् तान्येव स्मारकत्वेन स्वीक्रियन्ते। तथाच येन क्रमेण तान्यधीतानि तेनैव क्रमेणार्थस्मरणं जनयन्तीति युक्तं तेनैव क्रमेण तेषामनुष्ठानमिति तत्सिद्धं प्रयाजानां ब्राह्मणपाठक्रम इति।

ननु प्रयाजेषु प्रयोगसमवेतार्थस्मारकत्वं विधायकत्वेन कृतार्थानां ब्राह्मणवाक्यानां किमिति स्वीक्रियते। प्रयोगसमवेतार्थस्मारकाणां याज्यामन्त्राणामाग्नेयादिष्विव अत्रापि सत्त्वात्। न च तेषां देवतास्मारकत्वात् कर्मस्मारकत्वेन ब्राह्मणवाक्यं स्वीक्रियत इति वाच्यम्। आग्नेयादिषु अपि कर्मस्मारकत्वेन तत्स्वीकारापत्तेः। न चेष्टापत्तिः। तथा सति ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वं न स्यात्। तद्बलीयस्त्वे हि मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वमितरस्य तदस्मारकत्वमेवास्तु हेतुः। यदि च कर्मस्मारकत्वं ब्राह्मणवाक्यस्य तर्हि तत्स्मारकत्वेन ब्राह्मणवाक्यस्यान्तरङ्गत्वादन्तरङ्गभूतदेवतास्मारकत्वेन च मन्त्राणां बहिरङ्गत्वात् मन्त्रपाठाद्ब्राह्मणपाठ-

स्यैव बलीयस्त्वं स्यात्। तथाच मन्त्रतस्तु विरोधे स्यादिति पाञ्चमिकाधिकरणविरोधः। तत्र हि ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वादादौ आग्नेयानुष्ठानं पश्चादग्नीषोमीयस्येत्युक्तम्। अथाग्नेयादिषु याज्यामन्त्रा एव देवताप्रकाशनद्वारा कर्मप्रकाशकास्त्यज्यमानद्रव्योद्देश्यत्वरूपत्वात् देवत्वस्येति चेत्तर्हि प्रयाजेषु। तत्रापि हि याज्यामन्त्रा देवताप्रकाशकाः। प्रयाजेषु देवताया मान्त्रवर्णिकत्वात् तथाच प्रयाजेषु याज्यामन्त्राणां देवताप्रकाशनद्वारा कर्मप्रकाशकत्वात्तत्क्रमो मन्त्रपाठादेव स्यात्। न तु ब्राह्मणपाठक्रमात्। न च मन्त्रपाठस्यान्यादृशत्वात् प्रयाजक्रमो ब्राह्मणपाठक्रमादेवेति वाच्यम्। अन्यादृशत्वे तस्यैव क्रमस्यानुष्ठानं स्यात् मन्त्रक्रमस्य बलीयस्त्वात्। अभ्यासाधिकरणे च वार्त्तिककृता क्रमविनियुक्तैर्वलिङ्गकमन्त्रवर्णत्यादिना प्रयाजेषु याज्यामन्त्राणां क्रमविनियोग उक्तो नवमे। तन्त्ररत्ने समिधोऽग्ने आज्यस्य व्यन्तु इत्यादिभिः क्रमप्रकरणप्राप्तैर्मन्त्रैर्देवतागुणत्वेन समर्थन्ते इत्युक्तम्। मन्त्राणामन्यादृशक्रमत्वे तदनुपपत्तिः स्यात्। तत्कथं प्रयाजेषु ब्राह्मणपाठक्रमात् क्रम इत्युच्यते। सत्यमेतत् तथापि यत्रार्थस्मारका मन्त्रा न सन्त्येव यथा तूष्णीं विहितेषु कर्मसु तेषां क्रमो ब्राह्मणपाठक्रमात् तत्र तेषामेव प्रयोगसमवेतार्थस्मारकत्वात् प्रयाजोदाहरणन्तु कृत्वा चिन्तया। तत्र ब्राह्मणवाक्यानां प्रयोगसमवेतार्थस्मारकत्वाभावात्। यथाहुरर्थवादचरणे वार्त्तिककाराः। प्रयाजादिवाक्यान्यर्थं समर्प्य चरितार्थानि स्वरूपसंस्पर्शे सत्यपि प्रयोज्यतां न प्रतिपद्यन्ते इति। तस्मात् समन्त्रककर्मणां पाठक्रमो मन्त्रपाठात्। अमन्त्रककर्मणां क्रमस्तु ब्राह्मणपाठक्रमादेवेति दिक्।

प्रकृतौ नानादेशानां पदार्थानां विकृतौ वचनादेकस्मिन् देशेऽनुष्ठाने कर्त्तव्ये यस्य देशेऽनुष्ठीयन्ते तस्य प्रथममनुष्ठानमि-

तरयोस्तु पश्चादयं यः क्रमः स स्थानक्रमः। स्थानं नाम उपस्थितिः। यस्य हि देशेऽनुष्ठीयन्ते तत्पूर्वतने पदार्थे कृते स एव प्रथममुपस्थितो भवतीति युक्तं तस्य प्रथममनुष्ठानम्। अतएव साद्यस्के अग्नीषोमीयसवनीयानुबन्ध्यानां सवनीयदेशे सहानुष्ठाने कर्त्तव्ये आदौ सवनीयपशोरनुष्ठानं तस्मिन् देशे आश्विनग्रहणानन्तरं सवनीयस्यैव प्रथममुपस्थितेः। इतरयोस्तु पश्चात्। तथाहि ज्योतिष्टोमे त्रयः पशुयागा अग्नीषोमीयः सवनीय आनुबन्ध्यश्चेति। ते च भिन्नदेशाः अग्नीषोमीय औपवसथ्येऽह्नि सवनीयः सुत्याकाले आनुबन्ध्यस्त्वन्ते। साद्यस्को नाम सोमयागविशेषः। स चाव्यक्तत्वात् ज्योतिष्टोमविकारः अतस्ते त्रयोऽपि पशुयागाः साद्यस्के चोदकप्राप्ताः। तेषाञ्च तत्र साहित्यं श्रुतं सह पशूनालभेदिति। तच्च साहित्यं सवनीये देशे तस्य प्रधानप्रत्यासत्तेः स्थानातिक्रमसाम्याच्च। सवनीयदेशे ह्यनुष्ठाने क्रियमाणे अग्नीषोमीयानुबन्ध्ययोः स्वस्वस्थानातिक्रममात्रं भवति। अग्नीषोमीयदेशे त्वनुष्ठाने सवनीयस्य स्वस्थानातिक्रममात्रं आनुबन्ध्यस्य तु स्वस्थानातिक्रमः सवनीयस्थानातिक्रमश्च स्यात्। एवमानुबन्ध्यदेशे अग्नीषोमीयस्य द्रष्टव्यः। तथाच सवनीयदेशे सर्वेषामनुष्ठाने कर्त्तव्ये सवनीयस्य प्रथममनुष्ठानं आश्विनग्रहणानन्तरं हि सवनीयदेशः प्रकृतौ आश्विनग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति इत्याश्विनग्रहणानन्तरं तस्य विहितत्वात्। तथाच साद्यस्केऽप्याश्विनग्रहणे कृते सवनीय एवोपस्थितो भवतीति युक्तं तस्य स्थानात् प्रथममनुष्ठानं इतरयोस्तु पश्चादित्युक्तम्।

प्रधानक्रमेण योऽङ्गानां क्रम आश्रीयते स मुख्यक्रमः। येन क्रमेण प्रधानानि क्रियन्ते तेनैव चेत् क्रमेण तेषामङ्गान्यनुष्ठीयन्ते तदा सर्वेषामङ्गानां स्वैः प्रधानैस्तुल्यं व्यवधानं भवति व्युत्क्रमेण

त्वनुष्ठाने केषाञ्चिदङ्गानां स्वैः प्रधानैरत्यन्तमव्यवधानमन्येषाम-त्यन्तव्यवधानं स्यात्। तच्चायुक्तं प्रयोगविध्यवगतसाहित्यबाधा-पत्तेः। अतः प्रधानक्रमोऽप्यङ्गक्रमे हेतुः। अतएव प्रयाजशेषेण आदौ आग्नेयहविषोऽभिघारणं पश्चादैन्द्रस्य दध्नः। आग्नेययागैन्द्रयागयोः पौर्वापर्य्यात्। अत्र हि द्वयोरभिघारणयोः स्वेन स्वेन प्रधानेन तुल्यमेकान्तरितव्यवधानं भवति। आग्नेयहविरभिघारणाग्नेययागयोरैन्द्रयागहविरभिघारणेन व्यवधानात् ऐन्द्र-यागहविरभिघारणैन्द्रयागोश्चाग्नेययागेन व्यवधानात्। अत-श्चादावाग्नेयहविरभिघारणं तत ऐन्द्रस्य हविषस्तत आग्नेय-यागस्ततश्च ऐन्द्रो याग इत्येवंक्रमो मुख्यक्रमात् सिद्धो भवति। यदि त्वादावैन्द्रहविषोऽभिघारणं तत आग्नेयस्य हविषोऽभिघारणं क्रियते तदा याज्यानुवाक्यात् क्रमवशादा-दावाग्नेयस्यानुष्ठानादौ आग्नेययागतदङ्गहविरभिघारणयो-रत्यन्तमव्यवधानमैन्द्रयागतदङ्गहविरभिघारणयोस्त्वत्यन्तव्यव-धानं स्यात् तच्च न युक्तम्। अतो युक्तः प्रयाजशेषाभिघारणस्य मुख्यक्रमात् क्रम इति। स चायं मुख्यक्रमः पाठक्रमाद् दुर्बलः। मुख्यक्रमो हि प्रमाणान्तरसापेक्षप्रधानक्रमप्रतिपत्तिसापेक्ष-तया विलम्बितप्रतिपत्तिकः पाठक्रमस्तु निरपेक्षस्वाध्याय-पाठक्रममात्रसापेक्षतया न तथेति बलवान्। अतएव आग्नेयो-पांशुयाज्याग्नीषोमीयानां क्रमेणानुष्ठीयमानानामपि उपांशु-याज्याज्यनिर्वापयोर्मुख्यक्रमात् न पूर्वमनुष्ठीयते तस्य दुर्बल-त्वात्। पाठक्रमात्तु पश्चादनुष्ठीयते तस्य प्रबलत्वादिति।

स च अयं मुख्यक्रमः प्रवृत्तिक्रमाद्बलवान्। प्रवृत्तिक्रमे हि आश्रीयमाणे बहूनामङ्गानां प्रधानविप्रकर्षो भवति। अस्मिंस्त्वा-श्रीयमाणे सन्निकर्षः। तद्यथा। दर्शपूर्णमासयोरादावाग्नेया-नुष्ठानं ततः सान्नाय्यस्य तद्धर्माश्च केचित् पूर्वमनुष्ठीयन्ते तत्र

यदि प्रवृत्तिक्रममाश्रित्य तद्धर्माः सर्वे पूर्वमनुष्ठीयेरन् तत आग्नेयधर्माः तत आग्नेयानुष्ठानं ततः सान्नाय्यानुष्ठानं तदा तद्धर्माणां स्वप्रधानेन सह द्वाभ्यामाग्नेयधर्मतदनुष्ठानाभ्यां विप्रकर्षः स्यात्। यदा तु सान्नाय्यधर्माणां केषाञ्चित् पूर्वमनुष्ठानेऽपि अन्ये सर्वे मुख्यक्रममाश्रित्याग्नेयधर्मानुष्ठानानन्तरमनुष्ठीयन्ते तदा सर्वेषामाग्नेयधर्मसान्नाय्यधर्माणामकैकेन विजातीयेन व्यवधानं भवति आग्नेयधर्माणां स्वप्रधानेन सह सान्नाय्यधर्मैर्व्यवधानात्। सान्नाय्यधर्माणां स्वस्वप्रधानेन सह आग्नेयानुष्ठानेन व्यवधानादिति न विप्रकर्षः। तस्मान्मुख्यक्रमः प्रवृत्तिक्रमाद्बलवान्।

सह प्रयुज्यमानेषु प्रधानेषु सन्निपातिनामङ्गानामावृत्त्यानुष्ठाने कर्त्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमाद् यः क्रमः स प्रवृत्तिक्रमः। यथा प्राजापत्याङ्गेषु। प्राजापत्या हि वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीति वाक्येन तृतीयानिर्देशात् सेतिकर्त्तव्यताका एककालेन विहिताः। अतस्तेषां तदङ्गानां चोपाकरणनियोजनप्रभृतीनां साहित्यं सम्पाद्यम्। तत्र प्राजापत्यानां सम्प्रतिपन्नदेवताकत्वेनैकस्मिन् कालेऽनुष्ठानादुपपद्यते साहित्यं तदङ्गानाञ्च एकस्मिन् कालेऽनुष्ठानमशक्यम्। न हि अनेकेषां पशूनामुपाकरणमेकस्मिन् काले कर्त्तुं शक्यम्। अतस्तेषां साहित्यम् अव्यवधानेनानुष्ठानात् सम्पाद्यम् एकस्योपाकरणं कृत्वा परस्योपाकरणमिति। अतः प्राजापत्येषु एकं पदार्थं सर्वत्रानुष्ठाय द्वितीयः पदार्थोऽनुष्ठेयः। तत्र प्रथमपदार्थानुष्ठानं कस्यचित् पशोरारभ्य कर्त्तव्यम्। द्वितीयस्तु पदार्थो येन क्रमेण प्रथमोऽनुष्ठितस्तेनैव क्रमेणानुष्ठेयः। प्रयोगविध्यवगतस्य मिथोऽङ्गसाहित्योपपत्तये। प्रयोगविधिना हि द्वे च तदङ्गानामुपाकरणनियोजनादीनां मिथः साहित्यमानन्त-

र्थ्यापरपर्य्यायं विहितं तच्च साहित्यं सवनीयपशौ चोदकेन प्राप्तं तस्य प्राणिद्रव्यकत्वेन दैक्षविकृतित्वात् सवनीयाश्च एकादशीनेषु प्राप्तं सुत्या कालत्वसामान्यात् तेभ्यश्च प्राजापत्येषु प्राप्तं गुणत्वसामान्यात् प्राजापत्येषु च प्रतिपशुयागभेदाच्चोदका भिद्यन्ते। अतश्चोदकात् तत्तत्पश्वङ्गभूतानाम् उपाकरणनियोजनादीनां साहित्यमानन्तर्य्यापरपर्य्यायप्राप्तम्। अतएव एकस्य पशोरुपाकरणानन्तरमेव नियोजनं चोदकबलात् कर्त्तव्यत्वेन प्राप्तम्। तच्च न क्रियते प्रत्यक्षवचनावगतसर्वपश्वङ्गसाहित्यानुपपत्तेः। अत एकस्मिन् पशौ उपाकरणे कृते तदनन्तरमेव कर्त्तव्यत्वेन प्राप्तमपि नियोजनं न क्रियते। प्रत्यक्षवचनबलात्तु पश्वन्तरेषु षोड़षसु उपाकरणमेव स्वीक्रियते। कृते तु तेषु उपाकरणे प्रथमपशोर्नियोजनस्य तदीयोपाकरणेन व्यवधाने प्रमाणाभावात् प्रथमपशावेव नियोजनं कार्य्यम्। अतश्च येन क्रमेणोपाकरणं कृतं तेनैव क्रमेण नियोजनं कार्य्यम्। एवञ्च तत्तत्पशूपाकरणानां स्वस्वनियोजनैस्तुल्यं षोड़शक्षणैर्व्यवधानं भवति। अन्यथा केषाञ्चिदत्यन्तं व्यवधानं केषाञ्चिदव्यवधानं स्यात्। तच्च न युक्तम्। तस्माद्येन क्रमेण प्रथमः पदार्थोऽनुष्ठितस्तेनैव द्वितीयोऽनुष्ठेयः। तस्मिद्धं प्रथमानुष्ठितपदार्थक्रमाद्यो द्वितीयपदार्थक्रमः स प्रवृत्तिक्रम इति। तद्देवं निरूपितः संक्षेपतः षड्विधक्रमनिरूपणेन प्रयोगविधिव्यापारः।

फलस्वाम्यबोधको विधिरधिकारविधिः। फलस्वाम्यञ्च कर्मजन्यफलभोक्तृत्वं स च यजेत स्वर्गकाम इत्येवंरूपः। अनेन हि स्वर्गमुद्दिश्य यागं विदधता स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते। यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवते अष्टाकपालं निर्वपेदित्यादिभिस्त्वग्निदाहादौ निमित्ते कर्म विदधद्भिर्निमित्तवतः कर्मजन्यपापक्षय-

रूपफलस्वाम्यं प्रतिपाद्यते। तच्च फलस्वाम्यं तस्यैव योऽधिकारिविशेषणविशिष्टः। अधिकारिविशेषणञ्च तदेव यत् पुरुषविशेषणत्वेन श्रुतम्। अतएव राजा राजसूयेन स्वाराज्यकामो यजेतेत्यनेन स्वाराज्यमुद्दिश्य राजसूयं विदधतापि न स्वाराज्यकाममात्रस्य तत्फलभोक्तृत्वं प्रतिपाद्यते। किन्तु राज्ञः सतस्तत्कामस्य किञ्चित्पुरुषविशेषणत्वेनाश्रुतमपि अधिकारिविशेषणं भवति। यथाध्ययनविधिसिद्धा विद्या अग्निसाध्येषु च कर्मसु आधानसिद्धाग्निमत्ता सामर्थ्यञ्च एतेषाम् पुरुषविशेषणत्वेनाश्रवणेऽपि अधिकारिविशेषणत्वमस्त्येव। उत्तरक्रम विधीनां ज्ञानापेक्षाशक्तेरभावेन अध्ययनविधिसिद्धज्ञानवन्तं प्रत्येव प्रवृत्तेः। अतएव शूद्रस्य न यागादावधिकारः तस्याध्ययनविधिसिद्धज्ञानाभावात् आधानविधिसिद्धाग्नेरभावाच्च। अग्निसाध्यकर्मणां चाग्न्यपेक्षत्वेन तद्विधीनामाधानसिद्धाग्निमन्तं प्रत्येव प्रवृत्तेः। अध्ययनस्योपनीताधिकारत्वात् उपनयनस्य चाष्टवर्षं ब्राह्मणमुपनयीतेत्यादिना त्रैवर्णिकाधिकारत्वात्। तथा आधानस्यापि वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यादिना त्रैवर्णिकाधिकारित्वात्। यद्यपि वर्षासु रथकारोऽग्नीनादधीतेत्यनेन रथकारस्य सौधन्वनापरपर्य्यायस्याधानं विहितं योगाद्रूढेर्बलीयस्त्वात् तथापि न तस्योत्तरकर्मस्वधिकारः अध्ययनविधिसिद्धज्ञानाभावात्। न च तदभावे आधानेऽपि कथमधिकारः तदनुष्ठानस्य तत्साध्यत्वादिति वाच्यम्। तस्याध्ययनविधिसिद्धज्ञानाभावेऽपि वर्षासु रथकारोऽग्नीनादधीतेत्यनेनैव विधिना आधानमात्रौपयिकज्ञानापेक्षणात्। अन्यथा तस्यैव विधानानुपपत्तेः। अतश्च रथकारस्याधानमात्रेऽधिकारेऽपि नोत्तरकर्मस्वधिकारो विद्याभावात्। एवञ्च तदाधानं नाग्निसंस्कारार्थम्। संस्कृतानामग्नीनामुत्तरत्रोपयोगाभावात्। किन्तु

तदाधानं लौकिकाग्निगुणकं विश्वजिन्न्यायेन स्वर्गफलञ्च स्वतन्त्रमेव प्रधानकर्म विधीयते अग्नीनिति च द्वितीया। सक्तून् जुहोतीतिवत्तृतीयार्थे इति। प्रकृतमनुसरामः। तस्मिदं शूद्रस्याध्ययनविधिसिद्धज्ञानाभावादाधानसिद्धाग्न्यभावाच्च नोत्तरकर्मस्वधिकार इति।

ननु एवं स्त्रिया अधिकारी न स्यात् तस्या अध्ययनप्रतिषेधेन तद्विधिसिद्धज्ञानाभावात्। न च नास्त्येवेति वाच्यम्। यजेत स्वर्गकाम इत्यादौ स्वर्गकामपदस्योद्देश्यसमर्थकत्वेन पुंस्त्वस्योद्देश्यविशेषणत्वात् ग्रहैकत्ववदविवक्षितत्वेन स्त्रिया अधिकारस्यासाध्यत्वादिति चेन्नैवम्। अधिकारः साधितो न तु स्वातन्त्र्येण। न स्त्री स्वातन्त्र्यमर्हतीत्यादिना तस्य निषिद्धत्वात्। स्वातन्त्र्येण कर्त्तृत्वे प्रयोगद्वयस्यापि वैगुण्यापत्तेश्च। यजमानप्रयोगे पत्नीकर्त्तृकाज्यावेक्षणादिलोपप्रसङ्गात् पत्नीप्रयोगे च यजमानकर्त्तृकाज्यावेक्षणादिलोपात्। अतो दम्पत्योः सहाधिकारः। सहाधिकारत्वे च यजमानविद्ययैव पत्न्या अपि कार्य्यसिद्धेर्न ज्ञानं विना तस्या अधिकारानुपपत्तिः। पाणिग्रहणात्तु सहत्वं सर्वेषु कर्मसु तथा पुण्यफलेष्विति वचनेन स्त्रिया अधिकारनिर्णयाच्च। निषादस्थपतेरिवाध्ययनविधिसिद्धज्ञानविरहिणोऽपि एतया निषादस्थपतिं याजयेदिति वचनान्निषादेष्ट्या निषादस्थपतिशब्दे हि निषादश्च स्थपतिश्चेति कर्मधारयो नतु निषादानां स्थपतिरिति षष्ठीतत्पुरुषः षष्ठ्यर्थे लक्षणापत्तेः। एतावांस्तु विशेषः। निषादस्याध्ययनविधिसिद्धज्ञानाभावेनैतस्यैव विधेस्तत्कर्मौपयिकज्ञानाक्षेपकत्वं पत्न्यास्तु तादृशज्ञानाभावेऽपि यजमानेन सहाधिकारात्तस्य च तादृशज्ञानवत्त्वात्तेनैव च तस्याः कार्य्यसिद्धेर्नोत्तरक्रतुविधीनां ज्ञानाक्षेपकत्वम्। ये तु पत्नीमात्रकर्त्तृकाः पदार्थाः आज्यावेक्षणा-

दयस्ते ज्ञानं विना अशक्यानुष्ठाना इति तद्विधीनां तदाक्षेपकत्वं स्वीक्रियते इति। तत्सिद्धं अध्ययनविधिसिद्धज्ञानस्याधानविधिसिद्धाग्निमत्तायाश्चोत्तरकालकर्मसु अधिकारिविशेषणत्वमिति। एवं सामर्थ्यस्याप्यधिकारिविशेषणत्वं असमर्थं प्रति विध्यप्रवृत्तेः। आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति न्यायात्। तच्च सामर्थ्यं काम्ये कर्मणि अङ्गप्रधानविषयं नत्वङ्गासमर्थः प्रधानमात्रसमर्थश्च काम्येऽधिकारी। प्रधानविधेरङ्गविध्येकवाक्यतापन्नस्य साङ्गकर्मसमर्थं प्रत्येव प्रवृत्तेः यथाविनियोगमधिकारात्। यदि हि समर्थं प्रति हि कयाचित् श्रुत्या विरोधः स्यात् तदा समर्थस्याप्यधिकारः स्यात्। न च विरोधोऽस्ति स्वर्गकामश्रुतेः समर्थं प्रति प्रवृत्तौ विरोधाभावात्। प्रत्युतासमर्थं प्रति प्रवृत्तौ प्रधानविधेरङ्गवाक्यैकवाक्यतया प्रतिपन्नस्याङ्गसाहित्यस्य बाधापत्तेः नित्यवत् श्रुतानामङ्गानां पाक्षिकत्वप्रसङ्गाच्च। अतः साङ्गे प्रयोगे समर्थस्यैव काम्ये कर्मण्यधिकारः नित्यकर्मणां त्वङ्गेषु यथाशक्ति न्यायः। तानि हि यावज्जीवश्रुत्या यावज्जीवं कर्त्तव्यत्वेन चोदितानि। न च यावज्जीवं केनापि साङ्गः प्रयोगः कर्त्तुं शक्यते। अतो नित्यकर्मसु प्रधानमात्रसमर्थोऽधिकारी। अङ्गानि तु यावन्ति कर्त्तुं शक्यन्ते तावन्ति कार्य्याणीति आस्तां बहुत्वर्थां सूरिभिः पराक्रान्तत्वात्। तत्सिद्धं फलस्वाम्यबोधको विधिरधिकारविधिरिति। तदेवं निरूपितं चतुर्विधभेदनिरूपणेन विधेः प्रयोजनवदर्थपर्य्यवसानं मन्त्राणाञ्च प्रयोगसमवेतार्थस्मारकतयार्थवत्त्वम्। नतु तदुच्चारणमदृष्टार्थम्। दृष्टे सम्भवति अदृष्टस्यान्याय्यत्वात्। न च दृष्टस्य प्रकारान्तरेणापि सम्भवान्मन्त्राम्नानमनर्थकम्। मन्त्रैरेव स्मर्त्तव्यमिति नियमविधिश्रवणात्।

साधनद्वयस्य पक्षप्राप्तौ पन्यतरस्य साधनस्याप्राप्ततादशायां यो विधिः स नियमविधिः। यथाहुः—

आमिक्षापदसान्निध्यादामिक्षारूपो विशेष इत्यवगम्यते। यथाहुः—

आमिक्षां देवतायुक्तां वदत्यैवैष तद्धितः।
आमिक्षापदसान्निध्यात्तस्यैव विषयार्पणम्॥ इति॥

तथा।

श्रुत्यैवोपपदसमानार्थः सर्वनाम्ना प्रतीयते।
तदर्थस्तद्धितेनैव त्रयाणामेकवाक्यता॥ इति॥

तस्माद्यथा वैश्वदेवीशब्दोपात्तविशेषसमर्पकत्वेनामिक्षा-पदस्य वैश्वदेवीशब्देन सामानाधिकरण्यम्। एवं सामान्यस्य अविधेयत्वात् यज्यवगतयागविशेषसमर्पकत्वेन नामधेयस्य यजिना सामानाधिकरण्यम्। तत्सिद्धं नामधेयानां विधेयार्थपरिच्छेदकतयार्थवत्त्वम्। यथाहुः—तदधीनत्वाद्यागविशेषसिद्धेरिति। नामधेयत्वञ्च निमित्तचतुष्टयात् मत्वर्थलक्षणाभयात् वाक्यभेदभयात् तत्प्रख्यशास्त्रात् तद्व्यपदेशाच्च इति। तत्र उद्भिदा यजेत पशुकाम इत्युक्तोद्भिच्छब्दस्य यागनामधेयत्वं मत्वर्थलक्षणाभयात्। तथाहि उद्भिच्छब्दस्य गुणसमर्पकत्वे यागानुवादेन तावन्न गुणविधानं युज्यते फलपदानर्थक्यापत्तेः। न च अनेन वाक्येन फलं प्रति यागविधानं तस्मिंश्च गुणविधानं युज्यते वाक्यभेदापत्तेः। नापि गुणफलसम्बन्धविधानं सम्भवति परपदार्थविधानेन विप्रकृष्टविधानापत्तेः। धात्वर्थस्य स्वरूपेणाविधानात् तदुद्देशेन वा अन्यस्य कस्यचिदविधानात्। धातोरत्यन्तपारार्थ्यापत्तेश्च यज्यानर्थक्यापत्तेश्च। न हि तदानेन करणं समर्प्यते गुणस्य करणत्वेनान्वयात्। नापि फलं पशोर्भाव्यत्वेनान्वयात्। अथ गुणफलसम्बन्धविधाने तु यागस्याश्रयत्वेन सम्बन्ध इति चेन्न। यजेतेत्यत्राश्रयत्ववाचकपदाभावात्। अथ सिद्धान्ते करणत्व-

मिवाश्रयत्वमपि लक्ष्यमिति चेन्न। आश्रयत्वापेक्षया करण-त्वस्य लघुत्वेन तल्लक्षणाया एव युक्तत्वात्। फलाय विधीय-मानो गुणो यत्र कारकतामापद्यते स आश्रयः तत्त्वञ्चाश्रय-त्वम्। करणत्वञ्च निष्ठा शक्तिरिति लाघवम्।

किञ्च गुणफलसम्बन्धविधाने करणीभूतो गुणस्तन्निष्ठं वा करणत्वञ्च फलोद्देशेन विधेयम्। तत्राधेयपक्षे करणत्वस्य गुणोपसर्जनत्वेन प्रतीतिर्लक्षणयैव वाच्या तस्य तृतीयया प्रत्य-यार्थत्वात्प्राधान्येनोपस्थितेः। यदपि गुणनिष्ठं करणत्वं फलो-द्देशेन विधेयम् तदपि फलभावनायाः करणत्वेनान्वययोग्य-गुणनिष्ठकरणत्वोपस्थितिर्लक्षणयैव वाच्या। तृतीयाभिहि-तस्य करणत्वस्य क्रियान्वययोग्यस्य करणत्वेनान्वयायोग्यत्वात्। करणशब्देनाभिहितं करणकारकं तत्त्वेनान्वययोग्यम् न तृती-याभिहितम्। करणशब्दवत् तृतीयातस्तृतीयोत्पत्तिप्रस-ङ्गात्। अतश्च करणत्वेनान्वययोग्यगुणनिष्ठकरणत्वोपस्थिति-र्लक्षणयैव वाच्या। लक्षणया चोपस्थितकरणत्वस्य करणी-भूतस्य वा गुणस्य यत् फलभावनायां करणत्वं तदपि लक्षणयैव वाच्यम्। श्रूयमाणया तृतीयया गुणमात्रस्य यागं प्रति करण-त्वाभिधानात्। अतएव तन्त्ररत्ने चतुर्थे करणीभूतगोदोहनादेः पश्वर्थं समभिव्याहारादित्युक्तम्। अतश्च गुणफलसम्बन्धविधाने धातोरत्यन्तपारार्थ्यादिबहुदोषवत्त्वात् उद्भिच्छब्दस्य गुणसम-र्पकत्वे न गुणविशिष्टकर्मविधानमेव स्वीकार्य्यम्। तथा सति हि यजिना लघुभूतं करणत्वमात्रं लक्ष्यम्।

उद्भिच्छब्देन च प्रकृत्यंशेन मत्वर्थमात्रं लक्ष्यमिति गुणफल-सम्बन्धविधानाल्लाघवं भवति। धातोरत्यन्तपारार्थ्यादिकन्तु न भवत्येव धात्वर्थस्यैव फलोद्देशेन विधानात्। अतश्चोद्भिच्छब्दस्य गुणसमर्पकत्वेन मत्वर्थं लक्षयित्वा गुणविशिष्टं कर्मविधानं स्वी-

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते॥

अस्यार्थः। यस्य यदर्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः सः अपूर्वविधिः। यथा यजेत स्वर्गकाम इत्यादिः। यागस्य हि स्वर्गार्थत्वं न प्रमाणान्तरेण ज्ञायते किन्त्वनेनैव विधिनेति भवत्ययमपूर्वविधिः। पक्षे प्राप्तस्य तु यो विधिः स नियमविधिः यथा व्रीहीनवहन्यादित्यादिः। अनेन हि विधिना अवघातस्य न वैतुष्यार्थत्वं बोध्यते। अन्वयव्यतिरेकसिद्धत्वात्। किन्तु नियमः स च अप्राप्तांशपूरणं वैतुष्यस्य हि नानोपायसाध्यत्वात्। यस्यां दशायां अवघातं परित्यज्योपायान्तरं ग्रहीतुमारभ्यते तस्यां दशायां अवघातस्याप्राप्तत्वेन तद्विधानात्मकं अप्राप्तांशपूरणमेव अनेन विधिना क्रियते। अतश्च नियमविधौ अप्राप्तांशपूरणात्मको नियम एव वाक्यार्थः। पक्षे अप्राप्ततादशायां अवघातविधानमिति यावत्। न तु अपूर्वविधाविवात्यन्ताप्राप्तौ यागविधानमिति।

उभयस्य युगपत्प्राप्तावितरव्यावृत्तिको विधिः परिसंख्याविधिः। यथा पञ्च पञ्चनखा भक्ष्या इति। इदं हि वाक्यं न भक्षणविधिपरं तस्य रागतः प्राप्तत्वात्। नापि नियमपरम्। पञ्चनखापञ्चनखभक्षणयोर्युगपत्प्राप्तेः पक्षे प्राप्त्यभावात्। अत इदमपञ्चनखभक्षणनिवृत्तिपरमिति भवति परिसंख्याविधिः। सा च परिसंख्या द्विविधा श्रौती लाक्षणिकी चेति। तत्रात्र ह्येवावपन्तीत्यत्र श्रौती परिसंख्या। एवकारेण पवमानातिरिक्तस्तोत्रव्यावृत्तेरविधानात्। पञ्च पञ्चनखा भक्ष्या इत्यत्र तु लाक्षणिकी इतरनिवृत्तिवाचकपदस्याभावात्। अतएवैषा त्रिदोषग्रस्ता। दोषत्रयञ्च श्रुतहानिरश्रुतकल्पना प्राप्तबाधश्चेति। श्रुतस्य पञ्चनखभक्षणस्य हानात्। अश्रुतापञ्च-

नखभक्षणनिवृत्तिकल्पनात्। प्राप्तस्य चापञ्चनखभक्षणस्य बाधनादिति। अस्मिंश्च दोषत्रये दोषद्वयं शब्दनिष्ठं प्राप्तबाधस्तु दोषोऽर्थनिष्ठ इति दिक्।

तस्मादिदं मन्त्रैरेव स्मर्तव्यमिति नियमविध्याश्रयणान्न मन्त्राम्नानमनर्थकम्। अतश्च युक्तं मन्त्राणां प्रयोगसमवेतार्थस्मारकतयार्थवत्त्वम्। तत्र। ये मन्त्रा यत्र पठितास्तेषां तत्र यद्यर्थप्रकाशनं प्रयोजनं सम्भवति तदा तत्रैव विनियोगः। येषान्तु न सम्भवति तेषां यत्र सम्भवति तत्रोत्कर्षः। यथा पूषानुमन्त्रणमन्त्राणामित्युक्तम्। येषां क्वापि न सम्भवति तदुच्चारणस्य त्वगत्या दृष्टार्थत्वं सर्वथा अपितु तेषां नानर्थक्यमिति। नामधेयानां विधेयार्थपरिच्छेदकतयार्थवत्त्वम्। तथाहि उद्भिदा यजेत पशुकाम इत्यत्र हि उद्भिच्छब्दो यागनामधेयम्। तेन च विधेयार्थपरिच्छेदः क्रियते। अनेन हि वाक्येनाप्राप्तत्वात् फलोद्देशेन यागो विधीयते। यागसामान्यस्य चाविधेयत्वाद्यागविशेष एव विधीयते। तत्र कोऽसौ विशेष इत्यपेक्षायाम् उद्भिच्छब्दादुद्भिद्रूपो यो याग इति ज्ञायते। उद्भिदा यागेनेति सामानाधिकरण्येन नामधेयान्वयात्। तस्य च यजिना सामानाधिकरण्यं न नीलोत्पलादिशब्दवत्। तत्र हि उत्पलशब्दस्यार्थादुत्पलादन्यो नीलशब्दस्य वाच्योऽर्थोऽस्ति नीलगुणः। लक्षणया तु नीलशब्दस्य द्रव्यपरत्वेन सामानाधिकरण्यम्। उद्भिच्छब्दस्य तु यज्यवगतयागविशेषान्नान्यो वाच्योऽर्थोऽस्ति विशेषवाचित्वात्तस्य अतश्चार्थान्तरवाचित्वाभावेन न नामधेयस्य नीलशब्दवत्सामानाधिकरण्यम्। किन्तर्हि वैश्वदेव्यामिक्षेत्यत्र आमिक्षाशब्दवत्। वैश्वदेवीशब्दस्य हि देवतातद्धितत्वात् तद्धितस्य च सास्य देवतेति सर्वनामार्थस्मरणात् सर्वनाम्नां चोपस्थितविशेषवाचित्वेन विशेषपरत्वम्। तत्र कोऽसौ वैश्वदेवीशब्दोपात्तो विशेष इत्यपेक्षायां

कार्य्यम्। उद्भिद्वता यागेन पशुं भावयेदिति। कर्मनामधेयत्वे तु उद्भिच्छब्दस्य न मत्वर्थलक्षणा मुख्ययैव वृत्त्या यजिसामानाधिकरण्येन तस्यान्वयसम्भवात्। उद्भिदा यागेन पशुं भावयेदिति भवति च मुख्येऽर्थे लक्षणा आश्रयितुं न युक्ता सन्निकृष्टविधानन्तु समानमेव। न च एवं सोमेन यजेतेत्यत्रापि सोमपदस्य यागनामधेयत्वापातो गुणविधित्वे मत्वर्थलक्षणापत्तेरिति वाच्यम्। सोमपदस्य लतायां रूढ़त्वेन यागनामधेयत्वानुपपत्तेरगत्या तदाश्रयणात्। उद्भिच्छब्दस्य तु नैवं वाच्योऽर्थः कश्चित् प्रसिद्धः। उद्भिद्यते अनेनेति योगस्य तु गुण इव यागेऽपि फलोद्भेदनकारिणि उपपत्तेः। तस्सिद्धं उद्भिच्छब्दस्य मत्वर्थलक्षणाभयाद्यागनामधेयत्वमिति।

चित्रया यजेत पशुकाम इत्यत्र चित्राशब्दस्य वाक्यभेदभयात् कर्मनामधेयत्वम्। तथाहि न तावदत्र गुणविशिष्टयागविधानं सम्भवति। दधि मधु पयो घृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यमित्यनेन विहितत्वाद्यागस्य विशिष्टविधानानुपपत्तेः। प्राप्तस्य च यागस्य फलसम्बन्धे गुणसम्बन्धे च विधीयमाने वाक्यभेदः। अथ चित्राशब्दाच्चित्रत्वस्त्रीत्वयोः प्रतिपत्तिः। स्त्रीत्वस्य च स्वभावतः प्राणिधर्मत्वात् प्रकृते दध्यादिद्रव्यके कर्मणि निवेशायोगान्नानेन वाक्येन। प्रकृते कर्मणि गुणविधानम्। किन्तु प्राणिद्रव्यके कर्मणि तत्रास्य वाक्यस्यानारभ्याधीतत्वात्। अनारभ्याधीतानाञ्च प्रकृतौ वा द्विरुक्तत्वादिति न्यायेन प्रकृतिगामित्वात् प्राणिद्रव्यकाणाञ्च यागानां दैक्षस्य चेतरेष्विति न्यायेनाग्नीषोमीयप्रकृतिकत्वात् तदनुवादेनानेन वाक्येन गुणो विधीयते। दैक्षस्य च ज्योतिष्टोमाङ्गत्वेन स्वतन्त्रफलाकाङ्क्षाया अभावात् न पशुकामपदं फलसमर्पकं किन्त्वग्निसोमीयपशुसमर्पणाङ्गतया

प्राप्तकामनानुवादः। तथाच न वाक्यभेद इति चेन्न। तथापि दैक्षानुवादेन चित्रत्वस्त्रीत्वविधाने वाक्यभेदात् विशिष्टकारकविधानेऽपि गौरवलक्षणो वाक्यभेद एव। कारकस्यापि प्राप्तत्वेन विशिष्टविधानानुपपत्तेश्च। पशुकामपदस्यापि स्वरसतः फलपरस्य कामनानुवादत्वे आनर्थक्यापत्तेश्च।

न च नियमतः पशर्पणकामना भवति। कामनातः प्रागेव केनचिद्दत्ते पशौ तदभावात्। तथाच पशुकामपदस्य नित्यवच्छ्रवणबाधः। दैक्षस्योत्पत्तिशिष्टपुंस्त्वावरुद्धत्वेन तत्र स्त्रीत्वविधानानुपपत्तेश्च। आमिक्षायागानुवादेन वा अजिनविधानवत्। कृष्णसारङ्गोऽग्नीषोमीय इति विशेषविहितेन स्वसन्निधिपठितेन च कृष्णसारङ्गवर्णनावरुद्धे चित्रत्वस्यानारभ्याधीतत्वेन सामान्यशास्त्रेण विधानानुपपत्तेश्च पाश्वदश्यावरुद्ध इव साप्तदश्यविधानम्। अथ माभूदग्नीषोमीयपश्वनुवादेन चित्रत्वस्त्रीत्वविधानम्। सारस्वती मेषीति वाक्यविहितयागाङ्गमेष्यनुवादेन तु गुणविधानं स्यात्। चित्रयेति स्त्रीकारकानुवादेन चित्रत्वमात्रविधानात्। न च प्राकृतेन कृष्णसारङ्गवर्णेन नैराकाङ्क्ष्यान्न चित्रत्वविधानं युक्तमिति वाच्यम्। उपदिष्टेन चित्रत्वेनातिदिष्टस्य वर्णान्तरस्य बाधोपपत्तेरिति चेन्नैवम्। न हि चित्रयेत्येकेन पदेन स्त्रीकारकस्योद्देशं कृत्वा चित्रत्वस्य च विधानं सम्भवति। एकप्रसरताभङ्गलक्षणवाक्यभेदापत्तेः। उद्देश्यविधेयभावस्यानेकपदसाध्यत्वात्। अतएव वषट्कर्त्तुः प्रथमभक्ष इत्यत्र विशिष्टभक्षविधिर्नतु भक्षानुवादेन प्राथम्यविधिरित्युक्तं तृतीये मेष्यनुवादेन चित्रत्वविधाने फलपदानर्थक्यापत्तेश्च। उभयविधाने वाक्यभेदात्। प्रकृतस्य च यागस्य फलाकाङ्क्षाया अनिवृत्तेः। विश्वजिन्न्यायेन फलकल्पने गौरवम्। मधुदध्नित्याद्युत्पत्तिवाक्येन एत-

स्याधिकारवाक्यस्य प्रतिपन्नैकवाक्यताबाधेन वाक्यभेदप्रसङ्गाच्च। चित्राशब्दस्य कर्मनामधेयत्वे तु प्रकृतस्य कर्मणः फलाकाङ्क्षस्य फलसम्बन्धमात्रकरणान्न वाक्यभेदः। प्रकृताया इष्टेरनेकद्रव्यत्वेन चित्राशब्दस्य तत्रोपपत्तेः। तस्मिद्धं वाक्यभेदभयाच्चित्राशब्दः कर्म नामधेयमिति अग्निहोत्रं जुहोतीत्यत्राग्निहोत्रशब्दस्य कर्मनामधेयत्वं तत्प्रख्यशास्त्रात् तस्य गुणस्य प्रख्यापकस्य प्रापकस्य शास्त्रस्य विद्यमानत्वेनाग्निहोत्रशब्दः कर्मनामधेयमिति यावत्। तथाहि विधिना तावदेव विधेयं यत् प्रकारान्तरेणाप्राप्तम्। अप्राप्ते शास्त्रमर्थवदिति न्यायादग्निहोत्रशब्दस्य च गुणविधित्वे यो गुणस्तेन विधेयः स शास्त्रान्तरेण प्राप्तः कथमिति चेच्छृणु।

यदि तावदग्नौ होत्रमस्मिन्निति सप्तमीं समाश्रित्य होमाधारत्वेन अग्निर्विधेय इत्युच्यते ततः यदाहवनीये जुहोतीत्यनेनैव प्राप्तत्वाद्विध्यानर्थक्यम्। अथ अग्नये होत्रमस्मिन्निति चतुर्थीसमासमाश्रित्याग्निरूपा देवता अनेन समर्प्यत इति चेन्न। शास्त्रान्तरेण प्राप्तत्वात्। किं तच्छास्त्रान्तरमिति चेत्। अत्र केचित् यदग्नये च प्रजापतये च सायं जुहोतीति शास्त्रान्तरेण होमानुवादेनाग्निप्रजापत्योर्विधानान्न अग्निहोत्रपदं देवतासमर्पकम्। न च उभयाभिधाने वाक्यभेदः। परस्परनिरपेक्षविधाने हि वाक्यभेदः स्यात्। अग्नये जुहोति प्रजापतये जुहोतीति प्रत्येकं विधिव्यापाराच्च शब्दश्रवणात्तु परस्परसापेक्षस्यैव पदद्वयस्य आख्यातान्वयान्न वाक्यभेदः। अतएव ऋत्विग्भ्यो दक्षिणां ददातीति वाक्यविहितदक्षिणानुवादेन गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणेतिवाक्येन गवादीनां विधानं दशमोक्तं सङ्गच्छते। परस्परसा-

पेन्नाणां गवादीनां विधानेन वाक्यभेदाभावात्। अन्यथा दक्षिणानुवादेन अनेकेषां गवादीनां विधानं नैव सङ्गच्छते। इति अग्निप्रजापत्योश्च देवतयोः सतोः समुच्चयो नतु समुच्चितयोर्देवतात्वपृथक्कारकविभक्तिश्रवणाच्च। कारकार्थस्य च विभक्त्यर्थेन अन्वयात् तस्य प्राधान्यात्। अतश्च न अग्निषोमादिवदग्निप्रजापत्योः देवतयोः देवतात्वमिति।

अन्ये त्वाचार्य्या आहुः। अग्नये च प्रजापतये च सायं जुहोतीति वाक्यं नाग्नेः प्रापकं होमानुवादेन प्रजापतिमात्रविधानात्। न च विनिगमनाविरहादुभयविधानं युक्तमिति वाच्यम्। विधिना हि तदेव विधीयते यत् प्रकारान्तरेणाप्राप्तम्। तत्र यथा अनेन वचनेन सायंकालो न विधीयते सायं जुहोतीति वचनान्तरेण प्राप्तत्वात् तथा अग्निरपि न विधीयते अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति मन्त्रवर्णादेव प्राप्तत्वात्। मन्त्रवर्णस्यापि देवतासमर्पकत्वमस्त्येव। अतएव उपांशुयागविष्णादीनां मान्त्रवर्णिकं देवतात्वमित्युक्तम्।

नचैवं प्रजापतिदेवतयाग्नेर्बाधः स्यात्। चतुर्थ्या हि प्रजापतेः देवतात्वमवगम्यते अग्नेस्तु मान्त्रवर्णिकम्। तत्र सास्य देवतेति देवतात्वे तद्धितस्मरणवत् यद्यपि देवतात्वे चतुर्थीस्मरणं नास्ति सम्प्रदाने चतुर्थीति सम्प्रदाने तस्याः स्मरणात्। तथापि त्यज्यमानद्रव्योद्देश्यत्वं तावद्देवतात्वम्। तच्च सम्प्रदानस्वरूपान्तर्गतम्। त्यज्यमानद्रव्योद्देश्यत्वे सति प्रतिगृहीतत्वस्य सम्प्रदानत्वात्। अतश्चतुर्थीतः सम्प्रदानैकदेशतया देवतात्वप्रतीतिरस्त्येव। मन्त्रवर्णात्तु न देवतात्वं प्रतीयते किन्तु अधिष्ठानमात्रम्। अतश्च मन्त्रवर्णश्चतुर्थीतो दुर्बलः। यथाहुः—

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः।
देवताया विधिस्तत्र दुर्बलं तु परम्परम्॥ इति॥

अतश्च प्रबलप्रमाणबोधितप्रजापतिदेवतया दुर्बलप्रमाणबोधिताग्ने र्बाधः स्यादिति चेत्? सत्यं स्याद्बाधो यदि प्रजापतये जुहोतीति केवलं प्रजापतिविधानं स्यात् विधीयमानस्तु प्रजापतिर्मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितो होमोद्देशेन विधीयते समुच्चितोभयविधानापेक्षया अन्यतः प्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिमात्रविधाने लाघवात्। अतश्च न बाधकत्वं निरपेक्षविधानाभावात्।

यथा च त्वन्मतेऽग्निप्रजापत्योरेकहोमोद्देशेन विधानात्तुल्यार्थत्वेन विकल्पे प्रसक्ते प्रजापतेर्न पाक्षिकमग्निबाधकत्वं समुच्चयविधानात् एवं मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिविधानेऽपि न बाधकत्वमिति तुल्यम्। यत्तु अग्नेर्मान्त्रवर्णिकत्वे अग्निर्ज्योतिः सूर्यः स्वाहेति मिश्रलिङ्गमन्त्रवर्णबलात् सायंहोमस्य द्विदेवत्यत्वापत्तिरिति तन्न। अग्निसमुचितप्रजापतिविधानवत् सूर्यसमुचितस्याविधानात्प्रबलचतुर्थीप्रमाणबोधितेन प्रजापतिना मन्त्रवर्णप्राप्तस्य सूर्यस्य बाधितत्वात्। यत्वग्नेर्मान्त्रवर्णिकत्वे प्रजापतिविधेरेकेनैव वाक्येन सिद्धे र्यदग्नये च, प्रजापतये च सायं जुहोति यत्सूर्याय च प्रजापतये च प्रातर्जुहोति इति वाक्यद्वयं व्यर्थमिति तन्न। भवेद्व्यर्थं यदि प्रजापतिमात्रविधानं विवक्षितं स्यात्। सायं होमे अग्निसमुच्चितप्रजापतिविधानं प्रातर्होमे सूर्योज्योतिर्ज्योतिः सूर्यः स्वाहेति मन्त्रवर्णप्राप्तसूर्यसमुच्चितप्रजापतिविधानं च विवक्षितम्, न चैतदेकेन वाक्येन सिध्यति अतोऽर्थवद्वाक्यद्वयम्। यत्वग्नेर्मान्त्रवर्णिकत्वे मन्त्रवर्णस्याग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोतीति वाक्येन सायं होमे विनियुक्तत्वात्। तत्प्रकाश्यस्याग्नेरपि प्रजापतिसमुच्चितस्य तत्रैव देवतात्वेऽवगते यदग्नये चेति वाक्ये सायं शब्दो व्यर्थ इति। एवं यत्सूर्याय चेति वाक्ये प्रातः-

शब्दोऽपि व्यर्थं इति। किञ्च मन्त्रवर्णेन ज्योतिष्ट्वगुणविशिष्टस्याग्नेः प्रकाशनाद्विशिष्टस्यैव देवतात्वापातश्च इति, तदपि न। होमानुवादेन देवताद्वयविधानेऽपि मन्त्रवर्णयोर्लिङ्गादेव प्राप्तिसम्भवात् तद्विध्यानर्थक्यात्। मिश्रलिङ्गमन्त्रविधिपर्युदस्तयोः प्रतिप्रसवार्थं विधानेऽपि तद्विधिगतयोः सायंप्रातःशब्दयोरानर्थक्यं विधीयमानयोर्मन्त्रयोर्व्यवस्थयैव प्राप्तिसम्भवात्। तत्प्रकाश्ययोर्देवतयोर्व्यवस्थितत्वात्। अनुवादत्वोक्तिस्तु उभयत्र तुल्या इति मान्त्रवर्णिकत्वेऽपि अग्नेः केवलस्यैव देवतात्वं न गुणविशिष्टस्य। यदग्नये चेति वाक्येऽग्नेः पूर्वाहुतिरित्यत्र च केवलस्यैव अग्नेः सङ्कीर्त्तनात् केवलस्यैव देवतात्वावगतेः। यथा ह्युपांशुयागे विष्ण्वादे मान्त्रवर्णिकत्वेऽपि न गुणविशिष्टस्य देवतात्वं विष्णुरुपांशुयष्टव्य इत्यर्थवादे केवलस्यैव सङ्कीर्त्तनात् तद्वदिति। अतश्च मान्त्रवर्णिकत्वे दोषाभावाद्देवताद्वयविधाने च गौरवापत्तेः। अन्यतः प्राप्तमग्निमनूद्य तत्समुच्चितः प्रजापतिरेवात्र विधीयते होमानुवादेनोभयविधाने वाक्यभेदप्रसङ्गाच्च। न च चकारश्रवणान्न वाक्यभेद इति वाच्यम्? चकारार्थो हि समुच्चयः। तञ्च समुच्चयं यदि चकारः प्राधान्येन ब्रूयात् तदा प्रधानस्यानेकविशेषणसङ्ग्राहकत्वादारुण्यादिविशिष्टक्रयविधान इव कारकद्वयसमुच्चयविधाने वाक्याभेदो न भवेत्। न च चकारः समुच्चयं प्राधान्येन ब्रूते परोपसर्जनत्वेनैवाभिधानात्। अतएव दशमे भाष्यकारैश्चकारस्य समुच्चयशब्दाद्वैलक्षण्यं प्रतिपादितम्। समुच्चयशब्दो हि तं प्राधान्येन ब्रूते न चकारः। यदि प्राधान्येन ब्रूयात् तदा तत्प्रतिपन्नः समुच्चयः क्रियागुणैः सम्बध्येत। समुच्चयः शोभनः समुच्चयो द्रष्टव्य इतिवत् शोभनश्च द्रष्टव्य इति प्रयोगः स्यात्। समुच्चयशब्दवच्चकारस्य प्राधान्येन समुच्चयवाचित्वे धवखदिरयोः

समुच्चय इतिवत् धवखदिरयोश्चेत्यपि प्रयोगः स्यादिति। अतश्चकारः समुच्चयं न प्राधान्येन ब्रूते येन प्रधानस्यैव एकस्य विधानान्न वाक्यभेदो भवेत्। किन्तु कारकद्वयोपसर्जनत्वेनैव स तं ब्रूते। समुच्चितावग्निप्रजापती इति प्रधानद्वयविधाने च वाक्यभेदः स्यादेव। यथा ग्रहोद्देशेन सम्मार्गकत्वविधाने यद्यपि चकारसमुच्चयं प्राधान्येन ब्रूयात् तथापि तस्य कारकद्वयं प्रति प्राधान्यमनुपपन्नम्। विभक्त्यभिहितस्य कारकद्वयस्य क्रियोपसर्जनत्वेन समुच्चयोपसर्जनाभावात्। कृदन्तादिशब्दैरुपस्थितं हि कारकं क्रियातोऽन्येन सम्बध्यते। कारकसमुच्चयः कारणसमुच्चय इति विभक्त्यभिहितं क्रिययैव कारकाणां तथैवान्वयात्। अतश्चकारेण उच्यमानः स कारकोपसर्जनत्वेनैवोच्यते कारकद्वयं न च प्रधानं एकोद्देशेन च प्रधानद्वयविधाने वाक्यभेद एव। यथाहुः "अनेकपदसम्बद्धं यद्येकमपि कारकम्। तथापि तदनावृत्तेः प्रत्यये न विधीयते॥" इति। यच्च यथा दक्षिणानुवादेन गवादीनामनेकेषां विधानेन वाक्यभेदस्तथा कारकद्वयविधानेऽपीति तन्न। न हि गौश्चाश्वश्चेत्यस्मिन् वाक्ये दक्षिणानुवादेन गवादयो विधीयन्ते। उक्तरीत्या वाक्यभेदापत्तेः चकारश्रवणेन कथञ्चित् तत्परिहारेऽपि गवादीनामनेकेषां द्वादशशतसंख्यायाश्च विधाने वाक्यभेद एव। आध्वर्यवशाखायां गौश्चेत्यादेः तस्य द्वादशशतमित्यन्तस्य सहश्रुतत्वेन वाक्यैकवाक्यत्वमित्युक्तं दशमे। अतोऽनेन वाक्येनोभयविशिष्टा दक्षिणा विधीयते विशिष्टविधानाच्च न वाक्यभेदः। अतएव पार्थसारथिमिश्रैर्दशमे तत्र तत्र सोभयविशिष्टा विधीयते अनेकगवाद्यात्मिकैका दक्षिणा विधीयते इति चोक्तम्। न चैवं ऋत्विग्भ्यो दक्षिणां ददातीत्यस्यानर्थक्यं तस्यानुवादत्वात्। ऋत्विक्सम्बन्धपरत्वाद्वा दक्षिणाशब्दसामर्थ्याद्धि

ऋत्विजाञ्चमसाध्वर्य्वादीनाञ्च तत्सम्बन्धः स्यात् । एतद्वाक्यसत्त्वे च न भवति । ऋत्विक्‌शब्दस्य ब्रह्मादिगतऋतुगतयजननिमित्तत्वेन चमसाध्वर्य्यूणां ऋत्विक्त्वाभावस्य तृतीये उक्तत्वात् । अतश्च गौश्चाश्वश्चेत्यस्मिन् वाक्ये विशिष्टविधानान्न वाक्यभेदः । यदग्नये च प्रजापतये च सायं जुहोतीति तु न विशिष्टविधानं होमस्याग्निहोत्रं जुहोतीत्यनेन प्राप्तत्वात् । अतश्च होमानुवादेन समुच्चितोभयविधाने वाक्यभेदाद्गौरवापत्तेश्च नानेन वाक्येन देवताद्वयं विधीयते । किन्तु मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुचितः प्रजापतिर्होमोद्देशेन विधीयते । अतश्च नेदमग्नेः प्रापकं किन्तु मन्त्रवर्ण एव अतश्च तेनाग्नेः प्राप्तत्वान्नाग्निहोत्रपदं देवतासमर्पकं किं तर्हि नामधेयमेव ! तत् सिद्धमेतत्प्रख्यशास्त्रादग्निहोत्रशब्दस्य कर्मनामधेयत्वमिति । एवं प्रयाजेषु समिदादिदेवतानां समिधः समिधोऽग्नय आज्यस्य व्यन्त्वित्यादिमन्त्रवर्णेभ्यः प्राप्तत्वात्समिधो यजतीत्यादिषु समिधादिशब्दस्तत्प्रख्यशास्त्रात् कर्मनामधेयम् ।

यथाहुः "विधिस्त्वितगुणप्रापि शास्त्रमन्यद्यतस्त्विह । तस्मात्तत्प्रापणं व्यर्थमिति नामत्वमिष्यत" इति दिक् । श्येनेनाभिचरन् यजेतेत्यत्र श्येनशब्दस्य कर्मनामधेयत्वं तद्व्यपदेशात् तेन व्यपदेश उपमानं तदन्यथानुपपत्तेरिति यावत् ।

तथाहि यद्विधेयं तस्य स्तुतिर्भवति तद् यदि अत्र श्येनो विधेयः स्यात्तदार्थवादैस्तस्यैव स्तुतिः कार्य्या । न च यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्त इत्यनेन तत्रत्येनार्थवादेन श्येनः स्तोतुं शक्यः । श्येनोपमानेनार्थान्तरस्तुतेः क्रियमाणत्वात् । न च श्येनोपमानेन स एव स्तोतुं शक्यते । उपमानोपमेयभावस्य भिन्ननिष्ठत्वात् । यदा तु श्येनसंज्ञको यागो विधीयते तदार्थवादेन श्येनोपमानेन

तस्य स्तुतिः कर्त्तुं शक्यत इति श्येनशब्दस्य तद्व्यपदेशाद्याग-नामधेयत्वम्। तत्सिद्धं निमित्तचतुष्टयान्नामधेयत्वम्।

उत्पत्तिशिष्टगुणबलीयस्त्वमपि पञ्चमं नामधेयत्वे निमित्त-मिति केचिदाहुः वैश्वदेवेन यजेतेत्यत्र वैश्वदेवशब्दस्य कर्मना-मधेयत्वमुत्पत्तिशिष्टगुणबलीयस्त्वात्। उक्तमत्वर्थलक्षणादिप्र-कारचतुष्टयासम्भवात्। न तावन्मत्वर्थलक्षणाभयान्नामधेयत्वं वक्तुं युक्तम्। वैश्वदेवेनेति तद्धितेनैव मत्वर्थस्य यागस्योक्तत्वात्। सास्य देवतेत्यस्मिन्नर्थे हि तद्धितस्मरणम्। तत्रास्य शब्दस्य तद्धि-तान्तर्गतस्य यद्यपि सूक्तहविषोरितिस्मृतेः सूक्ते हविषि वा मुख्यत्वमवगतम् तथापि सर्वनाम्नामुपस्थितवाचित्वात् सूक्त-हविषोश्चात्रानुपस्थितत्वाद् यजेतेत्युपस्थितं यागमेवास्यशब्दो-ऽभिधत्त इति न यागे मत्वर्थलक्षणा। विश्वेदेवरूपैकदेवता-विधानाच्च न वाक्यभेदः नापि तत्प्रख्यशास्त्रान्नामत्वं यत्र हि विधित्सितो गुणोऽन्यतः प्राप्तस्तत्र तत्प्रख्यशास्त्रान्नामत्वम्। यथा-ग्निहोत्रशब्दे। अत्र चाग्नेयादयोऽष्टौ यागाः प्रकृताः तत्रामि-क्षायागे यद्यपि विश्वेदेवाः प्राप्ता वैश्वदेव्यामिक्षेति तथापि सप्तसु तेषु तेषामप्राप्तत्वाद्वैश्वदेवेन यजेतेत्यनेन तत्र तद्विधानेन तत्प्रख्यशास्त्रन्यायेन तद्वशान्नामत्वं स्यात्। न चामिक्षायाग-स्यैवैतन्नामेति वाच्यम्? वैश्वदेवेन यजेतेति वाक्यवैयर्थ्यापत्तेः। न च वैश्वदेवशब्दस्यामिक्षायागमात्रनामत्वे स एव यागोऽने-नानूद्यत इति वाच्यम्? न च तदनुवादे नास्ति किञ्चित् कृत्यम्। प्राचीनप्रवणे वैश्वदेवेन यजेतेति विधीयमानस्य प्राची-नप्रवणदेशस्य विनाप्येतद्वाक्यम्। आमिक्षायाग एव सम्बन्धो-पपत्तेः विश्वेदेवसम्बन्धात् तस्य आग्नेयाद्यशेषप्रकृतयागना-मधेयत्वे तु न वैश्वदेवेनेति वाक्यानर्थक्यम्।

तदा ह्यनेनाष्टौ यागा अनूद्यन्ते। अनुवादेन चैकप्रतीत्या

रूढ़त्वात्समुदितानामष्टानामपि वैश्वदेवशब्दो नामधेयं सिध्यति। एवञ्च प्राचीनप्रवणे वैश्वदेवेन यजेतेत्यत्र वैश्वदेवशब्देनाष्टौ यागाननूद्य प्राचीनप्रवणविधानं तत्र सिद्धं भवति। तद्वाक्यसत्त्वे अनेन वाक्येनामिक्षायाग एव प्राचीनप्रवणदेशसम्बन्धः स्यात्। अतश्चाष्टसु यागेषु प्राचीनप्रवणदेशसम्बन्ध एवैतद्वाक्यप्रयोजनम्। एवञ्च वैश्वदेवशब्दोऽष्टानां नामधेयम्। न च तत्र तत्प्रख्यशास्त्रं निमित्तं सम्भवति। सप्तसु वैश्वदेवादिषु प्राप्तेः। अतो न वैश्वदेवशब्दस्य तत्प्रख्यशास्त्रान्नामधेयत्वमिति। नापि तद्व्यपदेशात् तादृशस्य व्यपदेशस्यानुपलम्भात्।

अतश्च वैश्वदेवशब्दस्य नामधेयत्वे उक्तप्रकारचतुष्टयस्यानिमित्तत्वादुत्पत्तिशिष्टगुणबलीयस्त्वमेव निमित्तम्। तथा हि वैश्वदेवेन यजेतेत्यत्र न तावदप्रकृतकर्मानुवादेन देवताविधानं सम्भवति तेषामत्रानुपस्थितेः। नापि देवताविशिष्टकर्मान्तरविधानं सम्भवति गौरवापत्तेः। अष्टौ हवींषीति अनन्यगतिकलिङ्गविरोधात्। अतोऽनेन वाक्येन प्रकृतकर्मानुवादेन देवता विधीयत इति वक्तव्यम्। तत्रामिक्षायागे विश्वेदेवप्राप्तेः सप्तसु यागेषु अनेन वाक्येन विश्वेदेवा विधीयन्ते इति वक्तव्यम्। न च तत्सम्भवति तेषामुत्पत्तिशिष्टाग्न्याद्यवरोधात्। आकाङ्क्षया हि सम्बन्धो भवति आग्नेयादियागानां हि देवताकाङ्क्षा उत्पत्तिशिष्टैरग्न्यादिभिरेव निवृत्तेति न तत्र विश्वेदेवविधानं युक्तम्।

अतश्चोत्पत्तिशिष्टगुणबलीयस्त्वाद्वैश्वदेवशब्दस्य कर्मनामधेयत्वमिति। यथाहुः, "गुणान्तरावरुद्धत्वान्नवकाशो गुणोऽपरः। विकल्पोऽपि न वैषम्यात्तस्मान्नाम्नैव युज्यते।" अन्ये त्वाचार्या आहुः। यः शब्दो यत्र कर्मणि यद्गुणसम्बन्धं बोधयति स चेत्सम्बन्धः शास्त्रान्तरप्रतिपन्नस्तदा तस्य शब्दस्य तन्नामधेयत्वं

तत्प्रख्यशास्त्रत्वात्। तच्च शास्त्रान्तरं विधिर्वार्थवादो वेति अत्र नादरः। तत्राग्निहोत्रशब्देऽग्निसम्बन्धबोधकं शास्त्रान्तरं विधिरेव। वैश्वदेवशब्दश्च विश्वेदेवसम्बन्धं कर्मणि बोधयति विश्वेदेवसम्बन्धश्चाष्टसु यागेषु यत् विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वमित्यर्थवादादवगतः न च विधिरेव तत्प्रख्यशास्त्रं नार्थवाद इत्यत्र किञ्चित् प्रमाणमस्ति।

अतएव ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र ज्योतिष्टोमशब्दस्तानि वा एतानि ज्योतींषि य एतस्य स्तोमा इत्यर्थवादावगतं ज्योतिःसम्बन्धं निमित्तीकृत्य सोमयागे प्रवर्त्तमानस्तत्प्रख्यशास्त्रान्नामधेयं भवति। एवं प्रकृतेऽपि द्रष्टव्यं पञ्चमप्रकारकल्पने प्रमाणाभावात्।

अतएव वैश्वदेवाधिकरणे वार्त्तिककारैरेवमुपसंहृतम्। तत्प्रख्यतयैव सर्वेषां नामधेयत्वमिति यच्चोत्पत्तिशिष्टगुणबलीयस्त्वमुक्तम् तद्गुणविध्यसम्भवे युक्त्याभ्युच्चयमात्रम्। तस्मिद्धं तत्प्रख्यशास्त्राद्वैश्वदेवशब्दस्य कर्मनामधेयत्वमिति।

ननु पशुसोमाधिकरणे ऐन्द्रवायवं गृह्णाति इत्यादौ न यजिकल्पनं सोमेन यजेतेति प्रत्यक्षयजिश्रुतेरित्युक्तम्। तेन न्यायेन वैश्वदेव्यामिक्षेत्यत्रापि यजिकल्पनं मास्तु। वैश्वदेवेन यजेतेत्यत्र यजिश्रुतिः। एवञ्च अनेन वाक्येन देवताविशिष्टकर्मविधानमस्तु। तस्य च द्रव्याकाङ्क्षया वैश्वदेव्यामिक्षेति द्रव्यविधानमस्तु। एवञ्च न वाक्यद्वयस्याप्यनुवादत्वं नाप्यष्टौ हवींषीति अनन्यगतिकलिङ्गविरोधो भवेदिति चेत्? मैवम्। वैश्वदेव्यामिक्षेत्यत्र यज्यकल्पने आमिक्षा किमनुवादेन विधीयते इति वक्तव्यम्। विश्वेदेवानुवादेन विधाने द्रव्यस्य देवताङ्गत्वमेव स्यान्न यागाङ्गत्वम्। किञ्च वैश्वदेवीशब्दो देवतातद्धितत्वादामिक्षां तत्त्वेन ब्रूते इत्युक्तम्। तत्र विश्वेदेवानुवादेन द्रव्यविधानं वैश्व-

देवीशब्देनैव कर्त्तव्यं पदश्रुतेः। यथा भावनायां करणसमर्पणं धातुनैव क्रियते पदश्रुतेनैतूपपदेनेत्युक्तं भावार्थाधिकरणे तद्वत्। तत्र च वषट्कर्त्तुः प्रथमभक्ष इतिवत् एकप्रसरताविरोधः। अतो यागानुवादेनापि द्रव्यविधानार्थं वैश्वदेव्यामिक्षेत्यत्र यजिकल्पनं तावदवश्यं कर्त्तव्यम्। अतश्च पशुसोमाधिकरणन्यायवैषम्यम्। ऐन्द्रवायवं गृह्णातीत्यत्र देवताविशिष्टग्रहणविधानेन यज्यकल्पनात्। यजिकल्पने च वैश्वदेव्यामिक्षेत्यत्रैव द्रव्यदेवताविशिष्टकर्मविधानं युक्तं रूपद्वयश्रवणात्। एवञ्चाग्नेयोऽष्टाकपालः सौम्यः चरुरित्यादिवाक्यैर्वैश्वदेव्यामिक्षेत्यस्य वाक्यस्य प्रायः पाठो रक्षितो भवति। अन्यथा हि तेषु सर्वेषु द्रव्यदेवतासम्बन्धकल्पितयागविधानम् अत्र च द्रव्यमात्रविधानमिति वैरूप्यं प्रसज्येत। किञ्च वैश्वदेवेन यजेतेत्यत्र वैश्वदेवशब्दस्य देवतासमर्पकत्वे यद्विश्वे देवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वमित्येतस्यार्थवादस्यात्यन्तमिव निरालम्बनत्वं स्यात्। यत एतदर्थवादाद्धि वैश्वदेवकर्तृकत्वे कर्मणि प्रवृत्त इति ज्ञायते तद्देवतासमर्पकत्वे विरुध्यते। किञ्च वैश्वदेवेन यजेतेत्यस्य यागविधित्वे आमिक्षाया नोत्पत्तिशिष्टत्वम्।

तथाच तया न वाजिनं बाधितुं शक्यते इत्युभयोरपि आमिक्षावाजिनयोरेकयागाङ्गत्वं स्यात्। तथाच विकल्पः स चाष्टदोषदुष्ट इति। तस्माद्वैश्वदेव्यामिक्षेत्यत्रैव यागविधानम् इतरस्य त्वनुवादत्वम् अनुवादत्वे च यथा नानर्थक्यं तथोक्तमित्यास्तां तत्। तत्सिद्धं वैश्वदेवेन यजेतेत्यस्य शब्दस्य कर्मनामधेयत्वम्। तदेवं निरूपितं मत्वर्थलक्षणादिप्रकारचतुष्टयनिरूपणेन नामधेयार्थपरिच्छेदकतयार्थवत्त्वम्। अनर्थहेतुकर्मणः सकाशात् पुरुषस्य निवृत्तिकारणत्वेन निषेधानां पुरुषार्थानुबन्धित्वम्॥

तथाहि। एकपक्षस्यानुष्ठाने द्वितीयपक्षवाक्यस्य सतोऽपि प्रवर्त्तकत्वस्यानादरः द्वितीयपक्षस्यानुष्ठाने तद्वाक्यस्यानादृतप्रवर्त्तकत्वादनादरः पूर्ववाक्यस्यानुष्ठाने द्वितीयपक्षवाक्यस्य सतोऽपि प्रवर्त्तकत्वस्यानादरः द्वितीयपक्षस्यानुष्ठाने तद्वाक्यस्य द्वितीयपक्षसमयेऽनादृतप्रवर्त्तकत्वस्यानादरः पूर्ववाक्यस्यादृतप्रवर्त्तकत्वपरित्यागः पुनरपि प्रथमपक्षस्यानुष्ठाने तद्वाक्यस्य द्वितीयपक्षसमयेऽनादृतप्रवर्त्तकत्वस्यानादर इति वाक्यगाश्चत्वारः। अर्थोऽपि एकैकपक्षानुष्ठाने प्रमितस्त्यज्यते कश्चिदनादृत्य पश्चादाद्रियत इत्यर्थविषयाश्चत्वारो न्यायनिधावुक्ताः इति टिप्पणं तथाहीत्यस्य।

तथा हि यथा विधयः प्रेरणामभिदधतः स्वप्रवर्त्तकत्वनिर्वाहार्थं विधेयस्य यागादेः श्रेयःसाधनत्वमाक्षिपन्तः पुरुषं तत्र प्रवर्त्तयन्ति। एवं न कलञ्जं भक्षयेदित्यादयो निषेधा अपि निवर्त्तनामभिदधतः स्वनिवर्त्तकत्वनिर्वाहार्थं निषेध्यकलञ्जभक्षणादेरनर्थहेतुत्वमाक्षिपन्तः पुरुषं ततो निवर्त्तयन्ति। ननु कथं निषेधानां निवर्त्तनाप्रतिपादकत्वं यावता न भक्षयेन्न हन्तव्य इत्येवमादौ अव्यवधानेन नञर्थस्याभावस्य धात्वर्थेनान्वये धात्वर्थवर्जनकर्त्तव्यतैव सर्वत्र वाक्यार्थः प्रतीयते। ततश्च यजेतेत्यादौ यागकर्त्तव्यता वाक्यार्थः एवं निषेधेषु तत्तद्धात्वर्थवर्जनकर्त्तव्यता वाक्यार्थो न निवर्त्तनेति चेत्। मैवम्; अव्यवधानेऽपि धात्वर्थस्य प्रत्ययार्थोपसर्जनत्वेनोपस्थितस्य नञर्थेनान्वयायोगात्। नह्यन्योपसर्जनमन्येनान्वेति। राजपुरुषमानयेत्यत्र न हि राज्ञ आनयनान्वयित्वम्।

ततश्चाव्यवधानेऽपि नञर्थस्य न धात्वर्थेनान्वयः आख्यस्यैवैकहायिन्या नापि कलिङ्गादिपदार्थेऽन्वयः। तेषामपि कारकोपसर्जनत्वेन भिन्नपदस्य नञर्थेनान्वयायोगात्। एक-

हायन्या इवारुण्ये न अतश्चान्येनान्वयायोगान्नञर्थः प्रत्ययार्थेन सम्बध्यते तस्य प्राधान्यात्। क्रयभावनयैवारुण्यादीनि। तत्रापि नाख्यातांशवाच्ययार्थ्याभावनया। तस्या अपि लिङ्त्वांशवाच्यप्रवर्त्तनोपसर्जनत्वेनोपस्थितत्वात्। अतो लिङ्त्वांशेन नञ् सम्बध्यते तस्य सर्वापेक्षया प्राधान्यात्। नञश्चैष स्वभावो यत्स्वसम्बन्धिप्रतिपक्षबोधकत्वम्। नास्तीत्यत्र हि अस्तीतिसत्त्वशब्देन सम्बध्यमानो नञ् सत्त्वप्रतिपक्षम् असत्त्वं गमयति। तदिह लिङर्थस्तावत्प्रवर्त्तना। अतस्तेन सम्बध्यमानो नञ्प्रवर्त्तनाप्रतिपक्षं निवर्त्तनां गमयति। विधिवाक्यश्रवणेऽयं मां प्रवर्त्तयतीतिवन्निषेधवाक्यश्रवणेऽयं मां निवर्त्तयतीतिनिवृत्त्यनुकूलव्यापारनिवर्त्तनायाः प्रतीतिरनुभवसिद्धा। अतश्च सर्वत्र निषेधेषु निवर्त्तनैव वाक्यार्थः। एवञ्च विधिनिषेधयोर्भिन्नार्थत्वं सिद्धं भवति। हननादिवर्जनकर्त्तव्यतावाक्यार्थपक्षे तु कर्त्तव्यताया एवोभयत्र प्रतिपाद्यत्वात् तयोरेकार्थत्वं स्यात् तच्च न युक्तम्।

यथाहुः, "अन्तरं यादृशं लोके ब्रह्महत्याश्वमेधयोः। दृश्यते तादृगेवेदं विधानप्रतिषेधयो"रिति। तथा फलबुद्धिप्रमेयाधिकारिबोधकभेदतः। पञ्चधात्यन्तभिन्नत्वाद्भेदो विधिनिषेधयो" रिति। यन्मते इष्टसाधनत्वं लिङर्थस्तन्मते लिङ्संसृष्टो नञ् इष्टसाधनत्वप्रतिपक्षमनिष्टसाधनत्वं गमयति सर्वथापि तु नञः प्राधान्यात्प्रत्ययेनान्वयः। यदा तु तदन्वये किञ्चिद्बाधकं तदा अगत्या धात्वर्थेनान्वयः। तच्च बाधकं द्विविधं तस्य व्रतमिति उपक्रमो विकल्पप्रसक्तिश्च। अनेन च बाधकद्वयेन नञ्युक्तेषु केषुचिद्वाक्येषु पर्य्युदासाश्रयणं भवति। तदभावे निषेध एव "पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्। प्रतिषेधः स विज्ञेयो क्रियया सह यत्र नञ्।" तत्र नेक्षेतोद्यन्तमादित्यमित्यादौ पर्य्युदासाश्रयणं तस्य व्रतमित्युपक्रमात्।

तथा हि व्रतशब्देन कर्त्तव्योऽर्थ उच्यते। अतश्च स्नातकस्य कर्त्तव्यत्वेनोपक्रमात् किं तत्कर्त्तव्यमित्यपेक्षायामग्रे नेक्षेतोद्यन्तमादित्यमित्यादौ कर्त्तव्य एवार्थो वक्तव्य आकाङ्क्षिताभिधानात्। अर्थान्तरोक्तौ च पूर्ववाक्यस्य साकाङ्क्षत्वेनाप्रामाण्यप्रसङ्गात्। न हि कर्त्तव्यार्थस्य वक्तव्यत्वेनोपक्रमेऽग्रे च तदनभिधाने पूर्ववाक्यस्य साकाङ्क्षत्वे न प्रामाण्यं भवति। न च साकाङ्क्षस्य प्रामाण्यं गौरश्वः पुरुष इत्यादावपि प्रसङ्गात्। किञ्च नेक्षेतेत्यस्योपक्रमेण प्रतीयमाना एकवाक्यता च न स्यात्। अर्थान्तरोक्तेः अतश्चास्मिन् वाक्ये कश्चन कर्त्तव्य एवार्थो वक्तव्यः। तदुक्तौ च न नञः प्रत्ययेन सम्बन्धो घटते। तत्सम्बन्धे कर्त्तव्यार्थोक्तेरनुपपत्तेः प्रत्ययाच्चावतारितो नञ् धातुना सम्बध्यते तत्सम्बन्धे च न नञः प्रतिषेधकत्वं विधायकसम्बन्धेनैव तस्य प्रतिषेधकत्वस्य विधायकत्वप्रतिपन्नत्वात्। नामधातुयोगे तु न नञः प्रतिषेधकत्वं तयोरभिधायकत्वात्। यथाहुः, "नामधात्वर्थयोगी तु नैव नञ् प्रतिषेधकः। वदत्यब्राह्मणाधर्मावन्यमात्रविरोधिना"विति। अतश्च नेक्षेतेत्यत्र नञो धातुयोगान्नञ्चेक्षितिभ्यां ईक्षणविरोधी कश्चनार्थः प्रतिपाद्यते।

ननु तदन्यतद्विरुद्धतदभावेषु नञ् इति सत्यपि स्मरणे नञः स्वसंसृष्टाभाव एव शक्तिः लाघवात् न तदन्यतद्विरुद्धत्वयोः। तयोरभावघटितत्वेन गौरवात्। अनेकार्थत्वस्य चान्याय्यत्वात् अतो नञो धातुयोगे धात्वर्थाभावबोधकत्वमेव न तु तद्विरुद्धार्थबोधकत्वमिति चेत्सत्यं नञोऽभाव एव शक्तिः स्मरणं तु प्रतीत्यभिप्रायम्। नामधात्वर्थयोगीत्यपि प्रतीत्यभिप्रायं तथापि नेक्षेतेत्यत्र प्रत्ययस्य नञा सम्बन्धात्। तेन तावत्कश्चिदर्थो विधेयः तत्र न तावद्धात्वर्थो विधातुं शक्यते नञा तदभावबोधनात्। नापि तदभावो विधातुं शक्यते अभावस्याविधेयत्वात्।

अतश्च नञीक्षितिभ्यां विधानयोग्यः कश्चनेक्षणविरोधी अर्थो लक्षणया प्रतिपाद्यते। स चेक्षणविरोधी लक्ष्यमाणः पदार्थो नेक्षेदित्यनोक्षणसङ्कल्पः तस्येक्षणविरोधित्वात्। सत्यपि पदार्थान्तरस्येक्षणविरोधित्वे सर्वक्रियाविनाभूतत्वेन सङ्कल्पस्यैव लक्षणा स एव नेक्षेतेत्यत्र कर्त्तव्यतया विधीयते। अनीक्षणसङ्कल्पेन भावयेदिति। भाव्याकाङ्क्षायाञ्च एतावता हैनसा वियुक्तो भवतीति वाक्यशेषावगतः पापक्षयो भाव्यतया सम्बध्यते। एवं चात्र पापक्षयाथ सङ्कल्पस्य कर्त्तव्यतया विधानात्तस्य व्रतमित्यनेनैकवाक्यता सिद्धा भवति। तस्मिद्धं नेक्षेतेत्यत्र तस्य व्रतमित्युपक्रमात् पर्य्युदासाश्रयणमिति। नानुयाजेषु ये यजामहं करोतीत्यत्र विकल्पप्रसक्त्या तदाश्रयणम्। तथाहि यद्यत्र प्रधानसम्बन्धलोभान्नञः प्रत्ययसम्बन्धः स्वीक्रियेत तथा सत्यनेन वाक्येनानुयाजेषु ये यजामहः प्रतिषिध्यत इति वक्तव्यम्। अनुयाजेषु ये यजामहं न कुर्य्यादिति। न च तत्र तस्य प्रतिषेधः प्राप्तिं विना सम्भवति प्राप्तिसापेक्षत्वात्प्रतिषेधस्य। अतएव नान्तरीक्षे न दिवीत्यस्य न प्रतिषेधकत्वम् अन्तरीक्षे चयनाप्राप्तेः। अतएव ब्राह्मणो न हन्तव्य इत्यस्य नित्यवद्धननिवर्त्तकत्वं न स्यात् सर्वो हि पुरुषः कदाचिद्धननादौ प्रवर्त्तते कदाचिद्रागाद्यभावेन प्रवर्त्तते। तत्र यदि निषेधस्य प्राप्तिसापेक्षत्वं न स्यात्। तदा रागाविरोधाय हननादावप्रवृत्तं प्रत्येव शास्त्रप्रामाण्योपपत्तौ रागादिना हननादौ प्रवृत्तेन पुंसा न ततो निवर्त्तितव्यम्। प्राप्तिसापेक्षत्वे तु स्वयमप्रवृत्तं प्रति प्रसक्त्यभावेन निषेधशास्त्राप्रवृत्तेः। रागादिना प्रवृत्तं प्रत्येव भ्रान्तिनिमित्तरागबाधेन निषेधशास्त्रप्रवृत्तेः युक्ता प्रवृत्तस्य ततो निवृत्तिः। अतश्च ब्राह्मणो न हन्तव्य इत्यस्य निषेधस्य निवृत्तिनियमबोधकत्वम्। व्रीहीनवन्यादित्यस्यैवावघात-

नियमबोधकत्वं यथा खलु व्रीहीनवहन्यादिति शास्त्रं वैतुष्यार्थम् अवघाते ह्यप्रवृत्तं पुरुषं प्रति न प्रवर्त्तते वैयर्थ्यात् किन्तु दलनादौ प्रवृत्तं प्रति एवं न हन्यादिति शास्त्रं हननात् स्वयं निवृत्तं पुरुषं प्रति न प्रवर्त्तते वैयर्थ्यात् किन्तु हनने प्रवृत्तं पुरुषं प्रति कर्त्तव्यत्वेन प्रसक्तस्य प्रतिषेधात् यत् कर्त्तव्यं तन्नेति। अतश्च प्राप्तिसापेक्षत्वात् प्रतिषेधानाम् अनुयाजेषु ये यजामहं प्रतिषेधे तस्य तत्र प्राप्तिर्वक्तव्या। सा न तावद्धननादाविव रागतः सम्भवति। अतो यजतिषु ये यजामहं करोतीति शास्त्रात् सा वक्तव्या। शास्त्रप्राप्तस्य च प्रतिषेधे विकल्पः स्यात्। शास्त्रेण भ्रान्तिनिमित्तरागस्येव शास्त्रान्तरस्यात्यन्तबाधायोगात्। न च पदशास्त्रेण आहवनीयशास्त्रस्येव नानुयाजेष्विति विशेषशास्त्रेण यजतिषु ये यजामहं करोतीति सामान्यशास्त्रस्य बाधः स्यादिति वाच्यम्।

शास्त्रयोर्हि तत्र बाध्यबाधकभावो यत्र परस्परनिरपेक्षता। न हि पदशास्त्रस्य स्वार्थविधानार्थमाहवनीयशास्त्रापेक्षास्ति। निषेधशास्त्रस्य तु प्रसक्त्यर्थं यजतिषु ये यजामहं करोतीति विधेरस्ति अपेक्षा। एवञ्च निषेधशास्त्रस्य विशेषविषयत्वे न प्राबल्यवत् विधिशास्त्रस्याप्युपजीव्यत्वेन प्राबल्यमस्तीति न निषेधेन विधेरत्यन्तबाधो युक्त इति विहितप्रतिषिद्धत्वाद्विकल्पः स्यात्। स च न युक्तः, विकल्पे हि पक्षे शास्त्रस्याप्रामाण्यं भवति। नहि अनुयाजेषु ये यजामहकरणे नानुयाजेष्वत्यस्य प्रामाण्यं सम्भवति। व्रीह्यनुष्ठानसमय इव यवशास्त्रस्य द्विरदृष्टकल्पना च स्यात्। विधेर्हि एवं ज्ञायते यत् अनुयाजेषु ये यजामहकरणे कश्चनोपकारो भवतीति। निषेधाच्च तदकरणादिति ज्ञायते। अनृतवदनाकरणादिव दर्शपूर्णमासयोः कश्चिदुपकारः क्रियत इति। स चोपकारोऽदृष्टरूप इति

द्विरदृष्टकल्पनाप्रसङ्गः । अतश्च विकल्पो न युक्तः । प्रतिषेधाश्रयणे च तदापत्ते र्न तदाश्रयणं किन्तु नञः अनुयाजशब्देन सम्बन्धमाश्रित्य पर्युदास आश्रीयते । नञनुयाजशब्दाभ्यामनुयाजव्यतिरिक्तलक्षणात् अनुयाजव्यतिरिक्तेषु ये यजामहं करोतीति । अत्र च वाक्ये ये यजामहः कर्त्तव्यतया न विधीयते । यजतिषु ये यजामहं करोतीत्यनेनैव विहितत्वात् । किन्तु सामान्यशास्त्रविहितये यजामहानुवादेन तस्यानुयाजव्यतिरिक्तविषयता विधीयते । यद्द यजतिषु ये यजामहं करोति तदनुयाजव्यतिरिक्तेष्विति । एवं सामान्यशास्त्रस्य विशेषापेक्षिणः नानुयाजेष्वित्यनेनानुयाजव्यतिरिक्तविषयसमर्पणादनुयाजव्यतिरिक्तेषु ये यजामहः कर्त्तव्यतया प्राप्तः । अनुयाजेषु स न कर्त्तव्यतया प्राप्तो न वा प्रतिषिद्ध इति न विकल्पः । लक्षणया चानुयाजव्यतिरिक्तविषयसमर्पणान्नानुयाजेष्विति वाक्यस्य नाप्रामाण्यम् । अतश्च पर्य्युदासाश्रयणेन किञ्चिद्वाधकम् । तत्सिद्धं नानुयाजेष्विति वाक्ये विकल्पभयात् पर्य्युदासाश्रयणमिति । ननु पर्य्युदासश्रयणे यजतिषु ये यजामहं करोतीति शास्त्रेण यागसामान्ये प्राप्तस्य ये यजामहस्य नानुयाजेष्वित्यनेनानुयाजव्यतिरिक्ते सङ्कोचनात् पर्य्युदासस्योपसंहारादभेदः स्यादिति ।

उपसंहारे हि सामान्यप्राप्तस्य विशेषे सङ्कोचो भवति । यथा पुरोडाशं चतुर्धा करोतीति पुरोडाशसामान्ये प्राप्तं चतुर्द्धाकरणम् । आग्नेयं चतुर्द्धा करोतीति अनेन सङ्कोच्यते इति चेत् ? न । तन्मात्रसङ्कोचार्थत्वादुपसंहारस्य तदन्यमात्रसङ्कोचार्थत्वात् पर्य्युदासस्येति केचित् ।

अन्ये तु उपसंहारो नाम सामान्यतः प्राप्तस्य विशेषे सङ्कोचनरूपो व्यापारविशेषो विधेः पर्य्युदासः । पर्य्युदासस्तु स

विज्ञेयो यत्रोत्तरपदे न नञ् इत्यभियुक्तोक्त्या प्रत्ययातिरिक्तेन धातुना वा नाम्ना वा नञः सम्बन्धः पर्य्युदासः। अतः अनयो-स्तावत् स्वरूपतः स्पष्ट एव भेदः। एवं सति अभेदः आशङ्क्येत यदि यत्र पर्य्युदासस्तत्रावश्यमुपसंहारः स्यात्। नचैतदस्ति। नेक्षेतोद्यन्तमित्यादौ सत्यपि तस्मिन्नुपसंहाराभावात्।

न हि तत्राग्नेये चतुर्द्धाकरणमिव सामान्ये प्राप्तं किञ्चि-द्विशेषे सङ्कोच्यते। पापक्षयोद्देशेनानीक्षणसङ्कल्पमात्रविधा-नात्। प्रकृतोदाहरणे तु यजिसामान्ये प्राप्तस्य ये यजामह-स्यानुयाजव्यतिरिक्ते सङ्कोचनाद्यजिविधेरुपसंहारविधित्वं भवति नैतावता किञ्चिद्विरुध्यते। विध्यभावे हि कथं विधि-कार्य्यमुपसंहारः पर्य्युदासेन क्रियत इति भवति विरोधः नचात्र विधिर्नास्ति नञोऽनुयाजपदसम्बन्धेन विधेर्विधायकत्व-स्याव्याघातात्।

अत्र हि पर्य्युदासोऽनुयाजव्यतिरिक्तविषयसमर्पकः, आग्नेय-पदवत्। उपसंहारकस्तु विधिरेव। नचात्र तन्मात्रसङ्कोचा-भावान्नोपसंहार इति वाच्यम्। तन्मात्रसङ्कोच इति कोऽर्थः? आग्नेयमात्रे सङ्कोचो वा? सामान्यप्राप्तस्य विशेषमात्रे सङ्कोचो वा? आद्येऽनारभ्याधीतसाप्तदश्यस्य मित्रविन्दादिप्रकरणस्थेन वाक्ये नोपसंहारो न स्यात्। आग्नेये सङ्कोचाभावात्। द्वितीये चतुर्द्धाकरणस्य पुरोडाशमात्रे प्राप्तस्याग्नेये सङ्कोच-वत्। अनुयाजाननुयाजसाधारण्येन प्राप्तस्यानुयाजेषु सङ्को-चादुपसंहारः स्यादेव। एतावांस्तु विशेषः। आग्नेयादिवाक्येषु आग्नेयादयो विशेषाः स्वपदोपस्थापकाः प्रकृते तु पर्य्युदासे न तस्योपस्थितिरिति। उपसंहारन्यायस्त्वविशिष्ट एव। यच्च तदन्यमात्रसङ्कोचनार्थत्वात् पर्य्युदासस्येति तन्न। नेक्षेतेत्यत्र सत्यपि पर्य्युदासे सङ्कोचाभावात्। नह्यत्र सामान्ये प्राप्तं

तदन्यमात्रे सङ्कोच्यते। सङ्कल्पमात्रविधानादित्युक्तमित्यास्तां तावत्। तस्सिद्धं नानुयाजेष्वित्यत्र विकल्पप्रसक्त्या पर्य्युदासाश्रयणमिति। यत्र तु स आश्रयितुं न शक्यते। तत्र तत्प्रसक्तावपि निषेध आश्रीयते।

यथा नातिरात्रे षोड़शिनं गृह्णातीत्यत्र ह्यतिरात्रे षोड़शिनं गृह्णातीति शास्त्रप्राप्तमिति रात्रे षोड़शिग्रहणं प्रतिषिध्यत इति विहितप्रतिषिद्धत्वात् विकल्पप्रसक्तावपि पर्य्युदासो नाश्रीयते अशक्यत्वात्।

यदि ह्यत्र नञः षोड़शिपदेन सम्बन्धः स्वीक्रियेत तदा अतिरात्रे षोड़शिव्यतिरिक्तं गृह्णातीति वाक्यार्थः स्यात्। तत्र चातिरात्रे षोड़शिनं गृह्णातीति प्रत्यक्षश्रुतिविरोधः। एत एवातिरात्रपदेन नञः सङ्कोचेऽतिरात्रे षोड़शिनं गृह्णातीति प्रत्यक्षविधिविरोधात्। अतश्चात्र पर्य्युदासस्यानुपपत्तेर्निषेध एव स्वीक्रियते। विकल्पोऽपि स्वीक्रियते अनन्यगतेः। अतश्चैतत्सिद्धं यत्र तस्य व्रतमित्याद्युपक्रमः। विकल्पप्रसक्तिश्च नास्ति तत्र प्रतिषेधो यथा न कलञ्जं भक्षयेदिति। यत्र वा विकल्पप्रसक्तावपि पर्य्युदासो आश्रयितुं न शक्यते तत्र प्रतिषेधः यथा नातिरात्रे षोड़शिनं गृह्णातीति। एतावांस्तु विशेषः यत्र विशेषः यत्र विकल्पापादकः प्रतिषेधः तत्र प्रतिषिध्यमानस्य नानर्थहेतुत्वम्। उभयोरपि विधिनिषेधयोः क्रत्वर्थत्वात्। यत्र तु न विकल्पः प्रसज्यते प्राप्तिश्च रागतः प्रतिषेधश्च पुरुषार्थस्तत्र निषिध्यमानस्यानर्थहेतुत्वम्। यथा कलञ्जभक्षणस्य। दीक्षितो न ददाति न जुहोतीत्यादिषु तु दानहोमादीनां शास्त्रप्राप्तावपि पुरुषार्थत्वेन प्राप्तत्वात् क्रत्वर्थत्वेन च प्रतिषेधात्तुल्यार्थत्वाभावेन विकल्पप्रसक्तावपि न तेषामनर्थहेतुत्वम्। रागतः प्राप्त्यभावात्। रागतः प्राप्तस्यापि क्रत्वर्थ-

त्वेन प्रतिषेधे तदनुष्ठानात् क्रतोर्वैगुण्येनानर्थहेतुत्वापत्तिः। यथा स्वस्त्युपगमनादिप्रतिषेधे रागतः प्राप्तस्य पुरुषार्थत्वेन प्रतिषेधे निषिध्यमानस्यानर्थहेतुत्वमिति दिक्। तस्मिद्धं निषेधानां पुरुषार्थानुबन्धित्वम्। एवं सर्वस्यापि वेदस्य पुरुषार्थानुबन्धित्वम्।

प्रकृतमनुसरामः तदेवं यथाविध्यादीनामध्ययनविध्युपात्तानां नानर्थक्यम् एवमर्थवादानामपि तदुपात्तत्वेनानर्थक्यानुपपत्तेः स्वार्थे प्रतिपादने च प्रयोजनाभावात् लक्षणया प्रयोजनवदर्थपर्य्यवसानं वक्तव्यम्। ते चार्थवादा द्विविधा विधिशेषा निषेधशेषाश्च। तत्र वायव्यं श्वेतमालभेतेत्यादिविधिशेषाणां वायुर्वै क्षेपिष्ठा देवतादीनामर्थवादानां विधेयार्थस्तावकतयाऽर्थवत्त्वम्। बर्हिषि रजतं न देयमित्यादिनिषेधशेषाणां सोऽरोदीत् इत्यादीनामर्थवादानान्तु निषेध्यनिन्दकतयेति। अतश्च लक्षणया प्राशस्त्यमप्राशस्त्यं च स्वसन्निधिपठितविधिनिषेधापेक्षितत्वात् स्वार्थप्रतिपादने प्रयोजनमलभमानैरर्थवादैर्बोध्यते। तच्च प्राशस्त्यज्ञानं शब्दभावनायामितिकर्त्तव्यतात्वेन सम्बध्यते। परमप्रकृतमनुसरामः तस्मिद्धं वक्ष्यमाणार्थभावनाभाव्यकालिङ्गादिज्ञानकरणिका प्राशस्त्यज्ञानेतिकर्त्तव्यताका शाब्दीभावना लिङ्त्वांशेनोच्यत इति।

ननु केयं शाब्दी भावना। उच्यते पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः स एव विध्यर्थः। लिङादिश्रवणेऽयं मां प्रवर्त्तयतीति तस्य नियमेन प्रतीतेः। यत्तु इष्टसाधनत्वं विध्यर्थ इति तन्न। तथा सति इष्टसाधनमिति शब्दस्य विधिशब्दः पर्यायः स्यात्। न च पर्यायत्वं युज्यते सन्ध्योपासनं ते इष्टसाधनं तस्मात् तत् त्वं कुर्विति सहप्रयोगात्। पर्य्यायाणाञ्च सहप्रयोगाभावात्। अतश्च व्यापारविशेष एव विध्यर्थः। स च लोके पुरुषनिष्ठोऽभिप्राय-

विशेषः। वेदेतु पुरुषाभावाच्छब्दनिष्ठ एव प्रेरणापरपर्य्याय इत्युक्तम्। ननु लोके शब्दनिष्ठे प्रेरणापरपर्याये व्यापारशब्दप्रयोगाभावेन शक्तिग्रहाभावात् कथं तस्य विधिशब्दात् प्रतीतिरिति चेत् ? सत्यमेतत् तथापि बालस्तावत् स्तनपानादौ स्वकृतरोदनादिजनितमातृप्रवृत्तेः स्वाभिप्रायरूपप्रवर्त्तनाज्ञानजन्यत्वावधारणात् सविधिकप्रयोजकवाक्यश्रवणसमनन्तरभाविनीं प्रयोज्यवृद्धवृत्तिमुपलभ्य तत्कारणत्वेन तस्य प्रवर्त्तनाज्ञानमनुमिमीते। यद्यपि भोजनादौ स्वप्रवृत्तेः समीहितसाधनताज्ञानपूर्वकत्वात् प्रयोज्यवृद्धप्रवृत्तेरपि तत्पूर्वकत्वाध्यवसानं युक्तम्। तथाप्यन्यप्रेरितप्रवृत्तौ प्रवर्त्तनाज्ञानजन्यत्वस्योक्तमातृप्रवृत्तौ दर्शनेन प्रयोज्यवृद्धप्रवृत्तेरपि अन्यप्रेरितप्रवृत्तित्वात्कारणत्वेन प्रवर्त्तनाज्ञानस्यैवाध्यवसानम्। तच्च प्रवर्त्तनाज्ञानमन्वयव्यतिरेकाभ्यां प्रयोजकवाक्यजन्यमित्यवधारयति। तत्र चावापोद्वापाभ्यां प्रवर्त्तनायां विधिशक्तिमवधारयति। प्रवृत्त्यनुकूलो व्यापारः प्रवर्त्तना। स च व्यापारः प्रैषादिरूपो विविध इति प्रत्येकं व्यभिचारित्वाद्विधिशब्दवाच्यत्वानुपपत्तेः प्रवर्त्तनासामान्यमेव विधिशब्दवाच्यमिति कल्पयति। एवञ्च विधिश्रवणे प्रैषादिरूपस्य वक्त्रभिप्रायस्य प्रवर्त्तनात्वेनैव रूपेण प्रतीतिर्न विशेषरूपेण। तथैव शक्तिग्रहात्। विशेषरूपेण तु प्रतीतिर्लक्षणयैव। एवञ्च वैदिकलिङादिश्रवणेऽपि प्रवर्त्तनासामान्यमेव प्रतीयते। तत्र कोऽसौ व्यापार इत्यपेक्षायां प्रैषादिरूपस्य वक्त्रभिप्रायस्यापौरुषेये वेदेऽनुपपत्तेः शाब्दनिष्ठ एव प्रेरणापरपर्यायः कश्चिद्व्यापार इति कल्प्यते। अतश्च शब्दनिष्ठ एव प्रेरणापरपर्यायो व्यापारः शाब्दी भावना सैव च प्रवर्त्तनात्वेन रूपेण विध्यर्थ इति। अयमेव चार्थोऽभिधाभावनामाहुरन्यामेव लिङादय इति वार्त्तिकस्य। अभिधीयतेऽनेनेति व्युत्पत्त्या अभिधाशब्देन शब्द

उच्यते तद्व्यापारात्मिका भावना लिङादिवाच्येति केचिदाचार्य्याः।

अन्ये त्वाहुः, सत्यं प्रवर्त्तनासामान्यं विध्यर्थः तथैव शक्तिग्रहात् प्रवृत्त्यनुकूलश्च व्यापारः प्रवर्त्तना। अपौरुषेये च वेदे प्रैषादेरसम्भवात् कश्चित् पुरुषप्रवृत्त्या अनुकूलोऽसौ व्यापारविशेषः कल्पनीयः। विधिशब्दाभिधेयप्रवर्त्तनासामान्यस्य विशेषमन्तरेण अपर्य्यवसानात्। तत्र कोऽसौ व्यापार इत्यपेक्षायां धात्वर्थगतं समीहितसाधनत्वमेवेति कल्प्यते। तस्यापि स्वप्रवृत्त्यनुकूलत्वात् सर्वो हि समीहितसाधनतां ज्ञात्वा प्रवर्त्तते। अन्यप्रेरितोऽपि यदीष्टसाधनतां न जानाति तदा नैव प्रवर्त्तते स्वतन्त्रप्रेरणावादेऽपि तदाक्षिप्तसमीहितसाधनताज्ञानं स्वीक्रियते एव अन्यथा विधेः प्रवर्त्तकत्वानुपपत्तेः। अतश्चावश्यकत्वात् समीहितसाधनतैव प्रवर्त्तनात्वेन रूपेण विध्यर्थः। एवञ्च विधिशब्दस्यापरनिष्ठव्यापारबोधकत्वं लोकसिद्धं भवति। किञ्च शब्दे एको व्यापरः स्वन्द्याद्यतिरिक्तः कल्पनीयः। तस्य च स्वप्रवृत्तौ पराधीनप्रवृत्तौ वा करणत्वेनाक्लृप्तस्य प्रवर्त्तनात्वेन रूपेण ज्ञातस्य प्रवृत्त्यनुकूलत्वम्। शब्दस्य च परनिष्ठव्यापारज्ञापकत्वेन क्लृप्तस्य स्वनिष्ठव्यापारबोधकत्वम्। विधेश्च प्रवर्त्तकत्वनिर्वाहार्थं धात्वर्थस्य समीहितसाधनत्वमिति कल्पनाद्वरमावश्यकस्यैव समीहितसाधनत्वस्य स्वप्रवृत्तिहेतुत्वेन क्लृप्तस्य प्रवर्त्तनात्वेन रूपेण विध्यर्थत्वकल्पनं लाघवात् अन्यनिष्ठत्वाच्च। न च विधेः प्रवर्त्तकत्वनिर्वाहार्थं समीहितसाधनत्वकल्पनात् प्रेरणानभिधाने च विधेरप्रवर्त्तकत्वात् धात्वर्थस्य समीहितसाधनत्वकल्पनमेव नास्तीति वाच्यम्। प्रवर्त्तनाभिधानेन एतन्मतेऽपि विधेः प्रवर्त्तकत्वात्। विध्यभिहितस्य च प्रवर्त्तनासामान्यस्य विशेषमन्तरे-

णापर्य्यवसानात्समीहितसाधनत्वाक्षेपकत्वात्। न चेष्टसाधनत्वस्य विध्यर्थत्वे सन्ध्योपासनं ते इष्टसाधनं तत् त्वं कुर्विति सह-प्रयोगानुपपत्तिरिति वाच्यम्।

इष्टसाधनत्वस्य विशेषरूपेण विधिनानभिधानात्। प्रवर्त्तनात्वेन रूपेणाभिधानात्। सामान्यशब्दस्य च विशेषशब्देन दृष्टः सहप्रयोगः। पाञ्चालोराजा द्रुपद इत्यादौ। तस्मात्समीहितसाधनतैव प्रवर्त्तनात्वेन रूपेण विध्यर्थः। सैवच तेन रूपेण शब्देनैवाभिधीयते इति शाब्दी भावना। उक्तवार्त्तिकस्याप्ययमेवाभिप्रायः। अभिधीयते साभिधा समीहितसाधनता सैव प्रवर्त्तनात्वेन अभिहिता पुरुषप्रवृत्तिं भावयतीति भावना तां लिङादय आहुरिति। यथाहुः,

पुंसो नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्त्तकः।
प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्त्तनाम्॥ इति

तत्सिद्धम्। यजेतेत्यत्र लिङ्त्वांशेन शाब्दी भावनोच्यते।

इति आख्यातांशेन चार्थी भावनोच्यते। ननु केयमार्थी भावना। कर्त्तृव्यापार इति चेत्? न। यागादेरपि तद्व्यापारत्वेन भावनात्वापत्तेः। न चेष्टापत्तिः। तस्य प्रकृत्यर्थत्वेन प्रत्ययार्थत्वाभावादिति चेदत्राहुः। सत्यं न यागो भावना। किन्तु स्वर्गेच्छाजनितो यागविषयो यः प्रयत्नः सा भावना। स एव चाख्यातांशेनोच्यते यजेतेत्याख्यातश्रवणे यागे यजेतेति प्रतीतेर्जायमानत्वात्। यश्च यत्नपूर्वकं गमनादि करोति तस्मिन् देवदत्तो गमनं करोतीति प्रयोगदर्शनात्। वातादिना स्पन्दमाने तु नायं करोति किन्तु वातादिना अस्य स्पन्दो जायते इति प्रयोगात् करोत्यर्थस्तावत्प्रयत्नः। करोति सामानाधिकरण्यञ्चाख्याते दृश्यते। यजेत यागेन कुर्य्यात् पचति पाकं करोति गच्छति गमनं करोतीति। अतश्च करोतिसामानाधिकरण्यात्प्रयत्नस्याख्यात-

वाच्यत्वम्। न च रथो गच्छतीति प्रयोगानुपपत्तिः रथे यत्ना-भावादिति वाच्यम्। वोढुरन्तर्गतं प्रयत्नं रथे आरोप्य प्रयोगोपपत्तेः। यन्मतेऽप्यन्योत्पादानुकूलं व्यापारसामान्यं भावना तन्मतेऽपि रथे गमनातिरिक्तव्यापारानुपलब्धेः। रथो गच्छतीति प्रयोगस्यौपचारिकत्वमेवेति अतश्च प्रयत्न एवार्थो भावना। यथाहुः,

प्रयत्नव्यतिरिक्तार्थभावना तु न शक्यते।
वक्तुमाख्यातवाच्येह प्रस्तुतेऽप्युपरम्यत॥ इति।

अन्ये त्वाहुः भवितुर्भावनानुकूलो भावकव्यापारस्तावद्भावना। यस्मिन् व्यापारे कृते करणं फलोत्पादनाय समर्थं भवति तादृशो व्यापार इति यावत्। स एव चाख्यातार्थः। कुठारेण छिनत्ति इत्याख्यातश्रवणे हि भवत्येतादृशी मतिः। कुठारेण तथा व्याप्रियेत यस्मिन् व्यापारे कृते कुठारेण छेदनं भवतीति। एवं यजेत स्वर्गकाम इत्यस्यायमर्थः। यागेन तथा व्याप्रियते यस्मिन् व्यापारे कृते यागात् स्वर्गो भवतीति। स च व्यापारः क्वचिदुद्यमननिपतनादिः क्वचिच्चाग्न्याधानादिब्राह्मणतर्पणान्तः। कथम्भावाकाङ्क्षायां विशेषरूपेण पश्चादवगम्यते। अन्योत्पादनानुकूलत्वेन सामान्यतस्त्वाख्यात एवावगम्यते। रथो ग्रामं गच्छतीत्याख्यातेन ग्रामप्राप्त्यनुकूलो व्यापार एव प्रतीयते। रथस्तथा गमने व्याप्रियते यस्मिन् व्यापारे कृते गमनाद् ग्रामप्राप्तिर्भवतीति प्रतीतेः। नत्वत्र गमनमात्रमाख्यातार्थः। तस्य धातुनोक्तत्वात्। तत्र कोऽसौ व्यापार इत्यपेक्षायां पूर्वोत्तरावान्तरदेशविभजनसंयोजनरूप इति पश्चादवगम्यते। पूर्वेण प्रदेशेन वियुज्योत्तरेण संयुज्य रथो ग्रामं गच्छतीति प्रयोगात्। उद्यम्यनिपात्य कुठारेण छिनत्तीतिवत्। एवं देवदत्तः प्रयतते इत्यत्रापि देवदत्तस्तथा व्याप्रियते यथा प्रयत्नो भवतीति। प्रयत्नानु-

कूलो व्यापार एवाख्यातार्थो न तु प्रयत्नः तस्य धातुनोक्तत्वात्। व्यापारविशेषाकाङ्क्षायाञ्च इच्छादिः पश्चादवगम्यते उद्यमनपतनवत्। तथा च सर्वत्रानुगतत्वादन्योत्पादानुकूलं व्यापारसामान्यमेवाख्यातार्थः। न तु प्रयत्नमात्रम्। रथो गच्छति देवदत्तः प्रयतते इत्यादिषु तदभावात्। न चात्रौपचारिकत्वं वक्तुं युक्तम्। मुख्ये सम्भवति तस्यान्याय्यत्वात्। करोत्यर्थोऽप्यन्योत्पादानुकूलो व्यापार एव न प्रयत्नमात्रम्। करोतेश्चेतनाचेतनकर्तृकाख्यातसामानाधिकरण्यादिति। तस्मिद्धमन्योत्पादानुकूलो व्यापार आर्थी भावनेति। सैव च यजेतेत्याख्यातांशेनोच्यते भावयेदिति। तस्याश्च भाव्याकाङ्क्षायां स्वर्गादि भाव्यत्वेन सम्बध्यते। करणाकाङ्क्षायां यागादिः करणत्वेन सम्बध्यते। प्रयाजादय इतिकर्त्तव्यतात्वेन। एवञ्च यजेतेत्यादिना स्वर्गाद्युद्देशेन यागादेर्विधानात् सिद्धं यागादेर्धर्मत्वं प्रयोजनमुद्दिश्य वेदेन विहितत्वादिति। सोऽयं धर्मो यदुद्देशेन विहितस्तदुद्देशेन क्रियमाणस्तद्धेतुः। श्रीगोविन्दार्पणबुद्ध्या क्रियमाणस्तु निःश्रेयसहेतुः। न च तदर्पणबुद्ध्यानुष्ठाने प्रमाणाभावः।

"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय! तत्कुरुष्व मदर्पणम्॥" इति स्मृतेः॥ अस्याश्चाष्टकादिस्मृतिवत्प्रामाण्यादिन्यत्र विस्तरः।

"क्वाहं मन्दमतिः क्वेयं प्रक्रिया भाट्टसंमता।
तस्माद्भक्तेर्विलासोऽयं गोविन्दगुरुपादयोः।
ग्रन्थरूपो मदीयोऽयं वाग्व्यापारः सुशोभनः॥
अनेन प्रीयतां देवो गोविन्दो भक्तवत्सलः॥"

इति श्रीअनन्तदेवसूनुना आपदेवेन कृतं मीमांसान्यायप्रकाशं ग्रसकं मीमांसाप्रकरणं समाप्तिमगमत्।

---



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर बि, ए,

PANDITA KULAPATI

JIBANANDA VIDYASAGARA, B. A.

*Superintendent, Free Sanskrit College, Calcutta.*

